अन्तरिक्षनामान्युत्तराणि षोडशेत्यादि । खं नभ इत्यादीनि चापठितानि । पठितानि अम्बरबर्हिरादीनि च वस्त्रदर्भादिषु । अन्तरा मध्ये सर्वभूतानां क्षान्तं शान्तं स्थितं निष्क्रियं वा शान्तमव्यूहम्, निष्कम्भस्थानात्मकत्वात् । अन्तरा इमे रोदस्यौ द्यावापृथिव्यौ क्षियतीति वा । अन्तरा इमे क्षोण्याविति वा क्षान्तम् । एवमनेकविकल्पमुत्तरपदम्, अन्तराशब्दात् पूर्वपदम् । शरीरेष्वित्यादि-अन्तराशब्दात् पूर्वपदम्, अक्षयशब्दादुत्तरपदमिति विशेषः । विनाशिष्वप्यविनाशीत्यर्थः ।

तत्र समुद्र इत्येतत्पार्थिवेन समुद्रेण सन्दिह्यते ।

वत्रेत्यादि निगदव्याख्यातम् । अम्बरादिषु अम्बुमद्रवतीत्यादिष्वपि तुल्यश्रुतित्वादविशिष्टे सन्देहपदत्वे किञ्चित्प्रदर्शनीयमिति समुद्रशब्दः प्रदर्शितः-समुद्द्रवन्त्यस्मादाप इत्यादि । संहता ऊर्ध्वं द्रवन्त्यस्मादापोऽन्तरिक्षात्पार्थिवाद्य, रश्मिभिराकृष्यमाणा वायुना प्रेर्यमाणा इत्युभयत्र तुल्यमपादानसाधनत्वम् । संहता वाभिद्रवन्त्येनं नदनदीभावेन पार्थिवं भौमरसलक्षणा वायुना प्रेर्यमाणा आदित्यमण्डलाद्वा वर्षकाले रश्मिभिः पर्यावर्त्यमाना अन्तरिक्षलक्षणमापः । अत्रापि कर्मसाधनत्वमविशिष्टम् । संमोदन्तेऽस्मिन् जलचराणि भूतानि, इतरत्रान्तरिक्षचराणि । अथवा समुदको भवति । संमेकीभावे, उदकानु-

१–त्र B.
२–त्बर्हिकादी० C. अम्बरं वियत् व्योम बर्हि० D.
३–'मध्ये' इति नास्ति D.
४–स्थितिं B. नास्त्येव D. ५–भ D.
६–०मव्यूहम् B. C.
७–अन्तरालमेवोदस्य न ( दस्यौ C. ) क्षियतीति वा B. C.
८–अन्तरालमेक्षो० B. C. ९–क्षन्ताम् C.
१०–०कल्पादुत्त० B. ०कल्पउत्त० D.
११–'पदम्' इति त्रुटितम् D.
१२–अक्षरश० D. १३–'वि' इति त्रुटितम् D.
१४–इदं मूलवाक्यं नास्ति C. B.
१५–'अम्बुमद्रवतीत्यादिषु' नास्ति B. C. 'अपि' शब्दस्य 'पि' इत्यपि त्रुटितम् B.
१६–०माण वा० D.
१७–संहताभिद्रव्य तेन B. संहतापि द्रवन्त्येन C.
१८–भौमल० B. तामरसल० D
१९–वर्षाका० B.
२०–०वर्त्तमा० D.
२१–०मवशि० B. C.
२२–'अथवा' इति नास्ति D. । 'अथवा' इत्यस्मात् पूर्वं केवलं D. पुस्तके दुर्गवृत्तिनाम्ना कथन पाठ उद्धृतो वर्तते । स चेत्थम्–"दुर्गवृत्तौ–'समुद्रवन्त्यस्मादापो वीचीतरङ्गसीकरादिभावेन । समभिद्रवन्त्येनमापः, सर्वा एव ह्यापो निम्नानुसारित्वात् समुद्रमेवाभिमुख्येन द्रवन्ति, स हि निम्नो भवति ।' एवं दुर्गः" ।
२३–समेतिभावे B.

च्छन्दो रो मत्वर्थे। एकीभूतमुदकमस्मिन् विद्यत इति समुद्रः । वर्षास्वन्तरिक्षेऽपि तुल्यम् । समुन्नतीति[1] वा, एको लीलया भुवं क्लेदयति, अपरो[2] वर्षेणेति ।

तयोर्विभागो यस्मिन्मन्त्रे तत्र सुखप्रतिपत्त्यर्थमितिहासमाचक्षत[3] आचार्याः। निदानभूतम्-इति ह एवमासीत्-यः कथ्यते स इतिहासः। देवापिश्चेत्यादि । आर्ष्टिषेण इति भविष्यद्वृत्त्या व्यपदेशो[4] भूतवृत्त्या च । देवापिः शन्तनुश्च कौरव्यौ[5] कुरुवंशप्रभवौ भीमसेनपुत्रौ भ्रातरौ बभूवतुः । स शन्तनुः कनीयान् ज्यायसि[6] देवापौ[7] सति आत्मानं राज्ये[8] प्रजाभिरभिषेचितवान् । देवापिस्त्वग्दोषापदेशेन[9] राज्याध्यवरोपितो[10] वैराग्यात्तपः प्रतिपेदे । स[11] च किल च्यवननामापरनाम्नि[12] ऋष्टिषेणे ब्रह्मचर्यमुवास । स गुर्वनुग्रहाच्चेनैव शरीरेण वीतहव्यवद्[13] विश्वामित्रवच्च[14] ब्राह्मणो बभूव । ततोऽस्मिन्नन्तरे[15] शन्तनो राज्ये द्वादशवर्षाणि देवो न ववर्ष[16] । तमूचुः[17] मौद्गल्य[18]प्रमुखा ब्राह्मणाः । किमूचुः[19] ? अधर्मस्त्वयाचरितः, ज्येष्ठं भ्रातरमन्तरित्य[20] अतिक्रम्याभिषेचितम्[21], अभिषेचनमात्मनः कारितमित्यर्थः[22] । तस्मात् ते देवो न वर्षतीति[23] । स शन्तनुरेवमुक्तो देवापिं शिशिक्ष[24] । शिक्षतिर्दानकर्मा । तेन चात्र याञ्चापूर्वकत्वाद्दानस्य[25]

१–समुगत्ती B. समुनतिति C.
२–अरो C.
३–'सुखप्रतिपत्त्यर्थं' इति नास्ति D. अत्र B. C. पुस्तकयोरित्थं पाठो वर्त्तते–'तत्र सुख (खं C.) प्रतिपत्त्यर्थमिति भासीदितीति पत्यर्थमिति गासीदितीतिहासमिति पुराणविद आचक्षते–देवापिश्चे (विद्वे C.) इत्यादि' इति ।
४–व्यपदे॰ C. पदे॰ D.
५–'कौरव्यौ' इति नास्ति B. C.
६–॰वता C.
७–॰सी देवावौ C.
८–राज्यप्रजा॰ B. C.
९–त्त्वदोषा॰ B. त्वडोषा॰ C.
१०–राज्याद्यप्रध्य॰ B. C.
११–दि स च B. 'स च' इति नास्ति D.
१२–'च्यवनापरनाम्नि' इति पाठ उचितः । नाम्न्यार्ष्टि॰ B. नाम्न्यार्ष्टि॰ C.
१३–'ह' इति त्रुटितम् C.
१४–॰मित्रममित्र व॰ B. ॰मित्रमित्र व॰ C.
१५–ऽन्तरेण B.
१६–न वर्ष D.
१७–ते ऊचुः B.
१८–गौल्य D.
१९–किमुचुः D.
२०–भ्रातरित्य D.
२१–अदि क्र॰ C.
२२–॰म्यात्रि ( भि C. ) हेचत B. C.
२३–देवा न वर्षन्तीति D. 'इति' नास्ति C.
२४–देवार्वि शिक्ष C.
२५–याज्ञा पू॰ C.

स्वकारणभूता[1] याच्ञा लक्ष्यते[2] सामर्थ्यात्[3]। तेनैतदुक्तं[4] भवति-शिशिक्ष याचितवान्। किम्? प्रकरणसामर्थ्याद् वर्षहेतुकं प्रजानां शर्म राज्योपादानेन, भगवन्! एतेत्ते[5] राज्यं प्रशाधीति। एवंवादिनं[6] वीक्ष्यापन्नं लब्धोत्तमवर्णः[7] स्वजात्यनुरूपमुवाच देवापिस्तम् किं[8] नो राज्येन। पुरोहित इत्यादि। शान्तिकपौष्टिकार्थं वार्षिके च कर्मणि आर्त्विज्य तेय[9] करोमीति। तस्य देवापेरेतेदं[10] वर्षकामस्य सूक्तम्। तत्रेयमन्तरिक्षपार्थिवसमुद्रप्रविभागप्रदर्शनाय ऋगु[11]भवति।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
दशमः खण्डः[12]। ]

---

१-'णभूता' इति त्रुटितम् D.
२-लभ्यते D
३-सामर्त्यात् C.
४-तेवर्ण तदु० B. C.
५-एतन्ते C.
६-'एवं' नास्ति D.
७-वर्णो B.
८-०त्याभि C.
९-तप C.
१०-०वापरेतिद् C.
११-'ऋग्' इति त्रुटितम् B. C
१२-हस्तलिखितपुस्तकेष्वत्र खण्डस्य समाप्ति-निर्देशो नास्ति।

# [ अथ एकादशः खण्डः[1] । ]

आर्ष्टिषेणो होत्रमृषिर्निषीदन्[2] देवापिर्देवसुमतिं चिकित्वान् ।
स उत्तरस्मात्[3] अधरं[4] समुद्रमपो दिव्या असृजद्वर्ष्या अभि[5] ॥

आर्ष्टिषेणः-ऋष्टिसेनस्य पुत्र ऋषिः[6]। होत्रम्-कर्तुमिति शेषः। चतुर्थ्यर्थे वा द्वितीया, होत्राय निषीदन्। देवापिः[7]-दास्यामोऽस्मै[8] वृष्टिमित्येतां शोभनां मतिं चिकित्वान्[9] जानन् । स इति श्रुतेः यच्छब्दोऽध्याहर्तव्यः[10] । योऽसौ तेऽपि[11] कल्प आसीदिति शेषः। स[12] उत्तरस्मादन्तरिक्षलक्षणात्समुद्रात् । कुत एतत् ? अधरं समुद्रमित्यधरशब्दस्य[13] समुद्रविशेषणत्वेनोपादानसामर्थ्यात् तदुत्तरोऽपि[14] द्वितीय[15]समुद्र एवाभिप्रेत इति गम्यते। तेनाधरं पार्थिवं समुद्रमभि प्रति[16]इत्यर्थः । अपो दिव्याः-दिवि भवाः। असृजत्[17]-विसृष्टवान् वृष्टि[18]प्रदस्य देवस्य स्तुतिद्वारेण स एव पातितवानित्यर्थः। वर्ष्या-[19]वर्षप्रभवा वर्षलक्षणा[20] इत्यर्थः । आर्ष्टिषेणः-ऋष्टिषेणश्च्यवन इहाभिप्रेतो यथा तथा पुरस्तादुपपूर्व[21]वर्णितम्, इतिहासस्मृतेः प्रामाण्यात् । अतोऽन्तेवासी पुत्रोऽत्रा[22]भिप्रेतः । ऋष्टिप्र[23]धाना सेना यस्य, इषिता वा सेना शत्रून् प्रति प्रेषिता नित्यं सेना यस्य, कान्ता[24] वा इष्टा सेना यस्य। तस्य[25] च राजपुत्री सुकन्या भार्या, तत्सम्बन्धादुपपन्नः सेनया[26] सम्बन्धः । अथवा ऋष्टिः[27] रेषणा हिंसा च कामादीनाम्, अन्तश्चरश्शत्रूणां सेना समुदायः, स चेन्द्रियाणाम् ।

---

१—हस्तलिखितपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो नास्ति ।
२—निषेदन् C.
३—उ(० C.
४—०दध्वरं C.
५—[ ऋ० १०।९८।५ ] 'आर्ष्टिषेणो० अभि' इत्येव प्रतीकम् D.
६—'ऋषिः' इति नास्ति B. ७—देवावि C.
८—दामो B. C.
९—०नामतिश्चिकित्वात् C. १०—०दाध्याहार: D.
११—'अपि' इति नास्ति D.
१२—'स' इति नास्ति D.
१३—०धरस्य D.
१४—'तद्' इति नास्ति D.
१५—'द्वितीय' इति नास्ति B. C.
१६—'प्रति' इति नास्ति D.
१७—०जन् C. ०जत्सृष्ट० D. १८—सृष्टि० D.
१९—वृष्टि० D. २०—आर्ष्टि० C.
२१—०वर्णित० C.
२२—'अत्र' इति नास्ति B. C.
२३—०'अधा' इत्येव पाठः B. C.
२४—कान्तौ इवा B. अत्र कान्तया इति कान्तायै इति वा युक्तः पाठो भवेत् ।
२५—तस्याश्च B. C. तस्य-च्यवनस्येत्यर्थः ।
२६—सेनायाः D.
२७—इष्टिः B. इषिः C. ऋषिः D.

एतदुक्तं भवति-विषयाभिलाषमुख्यात् कामादिचित्तमलक्षे[1]पणप्रधाना सेना इन्द्रियग्रामो यस्य, दूषिता[2] वा प्रेषिता वा[3] गता पराङ्मुखीभूता[4] प्रत्याहारेण विषयेभ्य इन्द्रियसेना यस्य ।

सम्प्रति[5] प्रसिद्धं सेनाशब्दं निराह । सेना सह इनेनेश्वरेण । तेन हि विना गणं[6] उच्यते । समानं[7] वा साधारणं विजयाख्यं प्रयोजनमुद्दिश्य गतिर्यस्याः[8] । समानशब्दात्[9] पूर्वपदम्, गतेरु[10]त्तरपदमित्यर्थः ।

पुत्रः पुरु त्रायत इत्य[11]विभक्तिको[12] निर्देशः । पुरुणो दत्तादानु[13]र्थविकाच्च दुःखात् त्रायत इति पुरुत्रः[14] सन् द्विवर्णलोपेन पुत्रः । 'नापुत्रस्य लोकोऽस्ति[15]' इति श्रुतेः । 'अयं परश्चेति तस्मादनुशिष्टं पुत्र[16]मालोक्यमाहुः[17]' इति च[18] । निपरणाद्वा । निपरणं पिण्डपितृयज्ञश्राद्धादौ[19] पिण्डदानम्, तेन त्रायते शास्त्रसामर्थ्यात् पितॄन्, अकरणप्रत्यवाय[20]परिहारेण चात्मानम् । पृणातेः[21] पूर्वपदम्, त्रायतेरेवो[22]त्तरपदम् । पुन्नरक[23] ततस्त्रायत इति । तथा च स्मृतिः—

पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः[24] ।

पुत्र इति पुच्छब्दात् पूर्वपदमिति भेदः ।

ऋषिर्दर्शनात्, देवापिरस्यैव सूक्तस्य । सामान्येनैतां[25] प्रवचनम् । स्तोमांस्त्रिवृदादीन्[26] ददर्श इति विशिष्टमन्त्रदर्शनादेवेत्यौपमन्यवो मन्यते । ब्राह्मणमप्यस्मिन्नर्थे सामान्येन दर्शयति-तद्यदेनान्[27] मधुच्छन्दःप्रभृतीन्[28] तपस्यमानान्[29], तस्यैव तपसोऽनुभावात्, ब्रह्म ऋग्[30]यजुः-

---

१–०लक्षण B. C. २–दूषितता वा C.
३–'वा' इति नास्ति B. C.
४–भूता B. C ५–'प्रति' इति त्रुटितम् D.
६–हण C. ७–सामान C.
८–० र्य स्यात् B. ९–शब्दस्य D.
१०–एतेरु० B C. ११–इत्यर्थ । विभ० B.
१२–०क्तिका नि० B. ०क्तिक नि० D.
१३–०दानु प्रवि० D.
१४–पुरुण सन् विव० B. पुरुणस्त्रः सन् विव० C.
१५–[ ऐ. ब्रा० ३३ । १ ]
१६–पुत्र लो० B. C.
१७–[ अनुपलब्धमूलमिदं वचनम् ]
१८–वा D. चानिवरणा० C.
१९–श्राद्धादौ D. २०–०वायेन परि० D.
२१–पृणाते C.
२२–०ते तदेवो० B. ०ते तरेवो० C.
२३–पुनर्नर० B.
२४–[ मनु० ९।१३८ ]
२५–०न्येतत्प्रव नि० C.
२६–'दीन्' इति त्रुटितम् B.
२७–०देतन् D. ०देना C.
२८–०भृतय D.
२९–तपस्यमा C. ०माना C.
३०–'ऋगादि' इत्येव B. C.

सामाख्यं, स्वयंभु[1] अकृतकं नित्यं पूर्वाधीत[2]मिवाभ्यानर्षत्[3], 'ऋ गतौ'[4] आगतमाविर्भूतमित्यर्थः । तदृषीणामृषित्वमिति विज्ञायत[5] इति[6] । तत्र भवत्याख्या-

देवापिः-देवानामाख्या[7] व्याख्या । केन ? स्तुत्या च प्रदानेन च हविषाम्, देव शिष्टो मन्त्रः मतिं कर्तुं[8] जानन्, यथा ते तुष्यन्ति[9] तथा जानानः[10] ।

उत्तरः-उद्गततरः, हन्तिर्गत्यर्थः, उद्गततर इत्यर्थः । गतिरात्मसर्वगतेरेववत्[11] । अध रेषु[12] वा रोमत्यर्थे, अधोमानित्यर्थः । अध ऋच्छतीति[13] धातेरधरः । अधः[14] पुनर्न धावतीति गा- ऊर्ध्व[15]गतिः प्रतिषिद्धा । तस्यैवैकस्या[16]र्थस्य उत्तरा ऋक् भूयसे बहुतराय निर्वचनाय, निर्विविच्य वचनाय[17] । भूयस्त्वं च[18] पौरोहित्यार्त्विज्याभ्युपगमलिङ्गभूतधनार्थवा[19]र्ग- लोभादिना[20] ।

[ इति सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य एकादशः खण्डः[21] । ]

---

१—०भू C. २—०धीनमि० B. C.

३—०नर्षं C. ०नर्षत् तात् D.

४—[धा० ११९८३] 'इष गतौ' [धा० ४।१९] B.C.

५—लटि B.

६—[तै० आ० २।९]

७—०ता व्याता C. D. ०स्या प्राख्यात्या B. अत्र कदाचित् ०'स्या प्रास्या' इति पाठः स्यात् ।

८—कुर्वन् D.

९—ऽनु ( तिष्ठन्ति ) B. तुष्यन्ति C.

१०—जानन् D.

११—०गतित्व० B. C.

१२—ध्ना (रा ?) तीति B. ऋच्छन्तीति C.

१३—अधम C.

१४—मन्द्रा C.

१५—ऊर्ध्वं B.

१६—०वैतस्या० D.

१७—'निर्विविच्य वचनाय' इति नास्ति B. C.

१८—'च' इति नास्ति D.

१९—०र्थभूतवा० B.

२०—०लाहादि० B. C.

२१—आदर्शपुस्तकेष्वत्र खण्डसमाप्ति नं निर्दिष्टा ।

## [ अथ द्वादशः खण्डः । ][1]

यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्[2] ।
देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत्[3] ॥

उच्यते । यत्[4] यदा यस्माद्वा देवापिः शन्तनवे[5] शन्तन्वर्थं पुरोहितः सन् होत्राय वृतः वार्षिके[6] कर्मणि, कृपायमाणः । अनावृष्टिहतं[7] लोकमनुकम्पमानः । अदीधेत्-अन्वध्यायत् ध्यातवान् । किम् ? सामर्थ्याद् वृष्टिम्[8], मनोरथैः प्रार्थितवानित्यर्थः । पुरस्ताद्यच्छब्दश्रुतेस्तच्छब्दो[9]ऽध्याहार्यः[10] । तदा[11] तस्माद्वा[12], देवश्रुतं-देवैः[13] श्रुतम्, वृष्टिवनिम् 'वनु याचने'[14], चतुर्थ्यर्थे चोभयत्र द्वितीया, देवैः श्रुताय वृष्टिवनये वृष्टियाचिने । रराणः-रातेः । 'व्यत्ययो बहुलम्'[15] इति शपः श्लुः, ददद् वृष्टिमित्यर्थः । तस्मिन्नेव[16] कर्मणि ब्रह्मत्वेनावस्थितो बृहस्पतिर्वाचमस्मा अयच्छत् दत्तवान्[17], यया देवान् स्तुत्वाऽसौ वृष्टिं लब्धवान् । बृहस्पतिर्ब्रह्मासीदिति भाष्यानुरोधादेवं व्याख्यायते । मन्त्राक्षराणां तु-बृहस्पतिर्मध्यमस्थाने[18][19] स्तनयित्नुलक्षणां[20] वाचम्, तयापि सम्बन्धाद्[21] वर्षं लब्धवानित्यर्थः ।

शन्तनुः-कस्मात् ? शं सुखं हे तनो ! दुर्बल ! तवास्तु-इत्येवमसौ कारुणिकत्वादाशास्ते । शमस्मै तन्वै शरीराय वास्तु-इति वा, इति रोगिणं[22] कश्चिद्[23] दृष्ट्वा एवमाह, स च तदैवारोगः सम्पद्यते । पुरोहितः-पुर एनं[24] शान्त्यर्थं राजानो दधति कुर्वत इत्यर्थः । शान्तिकपौष्टिकाभिचारिकेषु कर्मसु पुर एनं दधति राजानः पुरस्कुर्वन्तीत्यर्थः[25] । तथा च मन्त्रः-'स इत्क्षेति सुधित ओकसि स्वे'[26] इति । स निगदव्याख्यातो मन्त्रः । बृहदुप[27]-

1–आदर्शपुस्तकेष्वत्र खण्डप्रारम्भो नैव निर्दिष्टः ।
२–०न्न गीधेत् C.
३–[ ऋ० १०।९८।७ ] अयश्चत् C. 'यद्देवापिः अयच्छत्' इत्येव प्रतीकम् D.
४–अथ D. ५–'शन्तनवे' इति नास्ति D.
६–वार्षे B. C. ७–गतं B. C.
८–वृष्टि B. C.
९–'शब्द' इति नास्ति D.
१०–०हर्तव्यः B.
११–कदा C. तद B.
१२–स्माद्वान् B. 'वा' इति नास्ति D.
१३–देवे श्रु० C. १४–[ धा० ८।८ ]
१५–[ पा० ३।१।८५ ] १६–अस्मि० B. C.
१७–'दत्तवान्' इति नास्ति D. १८–सन C.
१९–०स्थान B. C. २०–सनयि० C.
२१–०न्धान् C. २२–रोहिणं B. C.
२३–कश्चिद् B. C.
२४–एतं B. C.
२५–शान्तिकेत्यादिवाक्यं नास्ति B. C.
२६–[ ऋ० ४।५०।८ ] २७–०दुपाल्या० D.

तस्य सम्बोधनं हे ननो ! शं तुभ्यमस्त्विति ह्लादकत्वादेतत्[1] । स्तनयित्नुर्व्याजेनार्थं वदति[2] वा-शमस्यै तन्वा इति । तनुशब्दोऽन्तर्वर्तितवी[3]प्सार्थः[4] अस्मै शरीराय शरीराये-[5]त्यर्थः । पुरोहितः पूर्वमेनं दधति यैर्वृतमरुदादयः[6] । वृष्टियाचिनमिति याच्ञया[7] तत्पूर्वक-त्वाद्दानं लक्ष्यत इति भाष्यकाराभिप्रायः । तथा च मन्त्रो व्याख्यातः । बृहस्पतिर्ब्रह्माणं[8] करिष्यन्नेवं[9]व्यापार आसीत् ।

अथवा कश्चि[10]द्राजा जाय[11]मानोऽनावृष्ट्[12]या क्षतसेन ऋष्टिषेण[13] उच्य[14]ते । तस्य[15] स्वभूत ऋत्विगार्ष्टिषेणः । कौरीयादौ[16] तु होत्रं कर्तुमुपनिषीदन् इत्यादि समानं पूर्वेण ।

यद्देवापिः । यदा देवानामास ऋत्विक्, शन्तनवे-शं सर्वशरीरिणामस्त्वित्येवमर्थं वृष्टिप्रसाधने कर्मणि प्रवृत्तस्य च[17] यजमानस्यार्थाय[18] विद्वत्त[19]याग्रे वृतो होत्राय वृतः[20] तदा देवैः[21]श्रुतायेत्यादि समानं पूर्वेण ।

एवमाख्या[22]नस्वरूपाणां मन्त्राणां[23] यजमाने नित्येषु च पदार्थेषु योजना कर्तव्या । एष शास्त्रे सिद्धान्तः । तथा च वक्ष्यति-'तत्को वृत्रः ? मेघ इति नैरुक्ताः[24]' इत्यादि । 'मध्य-मश्च माध्यमिकाश्च वाचम्' इति[25] नैरुक्ताः । 'रात्रि[26]रादित्यस्योदयेऽन्तर्धीयत' इति । औपचा-[27]रिको मन्त्रेष्वाख्यानसमयः । परमार्थेन तु नित्यपक्ष इति सिद्धम् ।

इति स्कन्दस्वामिकृते[28] निरुक्तभाष्ये
सप्तमस्या-[ द्वितीयस्या-[29] ] ध्यायस्य
तृतीयः पादः ।
[ द्वादशश्च खण्डः समाप्तः ]

---

१—ह्लादि॰ B.C. ह्लाद॰ D. २—नयि अ B. पतर् C.
३—व B. C. ४—॰ब्दो वर्त्तित विसष्टार्थः D.
५—'शरीराय' नास्ति D.
६—॰तं D. 'मरुदादयः' त्रुटितम् B.
७—याज्ञया C. याछ्या D.
८—॰तिब्रह्मा C. ॰तिब्रह्मानर्का D. ९—॰ष्यानमेवं B.C.
१०—स्वचि॰ D. ११—यजमा॰ D.
१२—'वृट्या' इति द्विर्लिखितम् D. १३—ऋष्टितमेन D.
१४—'उच्य' इति त्रुटितम् B. १५—यस्य D.
१६—र्कारियादौ D. १७—'च' नास्ति D.
१८—॰स्यार्थ B. अग्रे त्रुटितम् । ॰स्याचाय D.
१९—॰त्तया॰ B. 'विद्व' इति त्रुटितम् ।
२०—कुतः B. कृतः C.
२१—तदेव श्रुत्यादि B. तदेव श्रुतायेत्यादि C.
२२—॰ स्यात॰ D. २३—'मन्त्रणां' नास्ति D.
२४—'क्ता इत्या' त्रुटितम् B. [ निरु॰ २।१६ ]
२५—॰ति ये नै॰ B. C.
२६—रात्र त्रि॰C.[cf.निरु॰२।१९] २७—अप चा॰D.
२८—॰कृतौ सप्त॰ D. इति सप्तमस्य तृतीयः C.
२९—आदर्शपुस्तकेष्वयं कोष्ठकान्तर्गतः पाठो नास्ति ।

# [ अथ चतुर्थः पादः।

## त्रयोदशः खण्डः ]

लोकक्रमादाह[2]–साधारणानीत्यादि[3]। एकोऽनेकस्मिन्नविरुद्ध[4]वृत्तिक्रियः[5] साधारण उच्यते[6]। तच्चैकत्वमसति व्यभिचारे तस्यैव प्रत्यभिज्ञानात्[7]। तच्च प्रत्यभिज्ञानं भिन्नार्थेषु संविज्ञात[8]-पदेषु तुल्यश्रुतिषु तुल्यनिमित्तेषु च शब्देषु[9]। गोसमुद्रादिष्वर्थेष्वपि[10]–'अथापि पशुनामेह[11] भवत्येतस्मादेव[12]' 'समुद्रवन्त्यस्मादापः[13]' अश्नोतेरक्षः[14], इत्येवं तुल्यनिमित्तत्वम्[15]। अत एव-मादयः[16] साधारणशब्दाः। यस्तु क्रियासाम्येऽपि क्वचिदर्थे रूढोऽन्यत्र[17] योगात् प्रवर्तते, नासौ साधारणशब्दः। किन्तर्हि? प्रतीतिविप्रकर्षात्तत्र गौणमुख्यव्यपदेशः[18]। यथा-अग्नि-र्माणवकः, सिंहो देवदत्तः, अग्निमीळे पुरोहितमिति[19] च, श्येनो वज्रं[20] इति च[21]। पुरो-हितर्त्विक्शब्दावग्नौ[22], श्येनादयोऽपि गुणात्[23] शत्रुबाधनसाधनत्वसामान्यादभिचारयोगेषु[24]।

यत्रापि निमित्तभेदः। यथा निर्ऋतिशब्दस्य देवतायां पृथिव्याञ्च, ऋच्छते[25]-र्निरमणाच्च[26]। यथा योनिशब्दस्य[27] वेद्यन्तरिक्षादौ[28] स्थानविशेषे[29] स्त्रीन्द्रिये च, यौतेर्यातेश्च निर्वचनात्। तत्रावयवभूतधात्वर्थभेदानु[30]विधानेन शब्दस्याभिधान[31]लक्षणव्यापारभेदाद्[32] भेद एव न[33] साधारणशब्दत्वम्[34], पूर्वोत्तरयोरुत्पादविनाशदर्शनात्। प्रदीपज्वालावद्रूप-

---

१–आदर्शपुस्तकेष्वयं कोष्ठकान्तर्गतः पाठो नास्ति।
२–॰दित्याह D. ३–'नीत्यादि' इति त्रुटितम् D.
४–'कस्मिन्नवि॰ इति त्रुटितम् B. ॰न्नवरु॰ C.
५–त्वरिति यः B. त्वक्रियः C. ६–शब्दाः C.
७–अस्य वाक्यस्य स्थाने C. पुस्तके–'यस्तु क्रिया-साम्येपि क्वचिदर्थे रूढोऽन्यनात्' इति पाठो वर्तते। वस्तुतोऽयमग्रिमः पाठोऽत्र भ्रमादागतः।
८–संज्ञवित C. 'संज्ञ' इत्येव B. अग्रे त्रुटितम्।
९–'शब्देषु' इति नास्ति B. १०–॰त्र्यपि B. C.
११–॰शूनामेव B. ॰'नाम' इत्येव D.
१२–[ निरु॰ २। ५ ]
१३–[ निरु॰ २।१० ] ॰'स्माद' इत्येव B. अग्रे 'पः,' अ इति त्रुटितम्।
१४–[cf. निरु॰ ५।३] श्नोतो B. श्नोते C. रक्षः D.
१५–॰मित्तम् D. १६–॰मादा॰ C.
१७–॰रूढ्यान्य॰ B. ॰रूढ्योन्य॰ C. १८–गौणादिमु॰ D.
१९–॰हितं यज्ञस्य देवमृत्विजमिति च D. [ऋ॰ १।१।१]
२०–'ज्र' इति त्रुटितम् D. २१–'च' इति नास्ति B. D.
२२–॰ब्दावग्नौ B. C. २३–गुणाः B.
२४–॰भिचारेषु यो॰ D.
२५–॰तोर्भि॰ B. ॰तेर्धि॰ C. २६–'च' नास्ति B. C.
२७–॰ब्दस्तु B. C. २८–'वेद्यन्त' इति त्रुटितम् B.
२९–॰निवेशस्त्रीन्द्रिये चेति यौ॰ D.
३०–॰भेदेनानु॰ B. C. ३१–॰धाने ल॰ B. C.
३२–॰दान् C.
३३–'न' इति त्रुटितं भाति B. C. ३४–॰त्वात् B.

सामान्यात् तत्त्वेन यः प्रत्यभिज्ञाप्रत्ययोऽस्मिन् विषये ऽसौ भ्रान्तः[2], शब्दभेदात्, हेतोरुक्तत्वात्[3] ।

तदेतत् केचिदननुमन्यमाना[4] आहुः-विषम उपन्यासः । युक्तं[5] यत् प्रदीपादिषु[6] प्रत्यक्षेणैव बलीयसा प्रमाणेन[7] प्रत्यभिज्ञाप्रत्ययस्य बाधनम् । इह त्ववयवभूतधात्वर्थभेदा[8]-नुविधानेन काल्पनिको भेदः शब्दस्य । प्रत्युत प्रत्यक्षेण तत्त्वप्रत्ययेन बाध्यते । एतदुक्तं भवति-शब्दविषयेऽनेकार्थप्रतीत्यन्यथाऽनुपपत्त्या[9] एकस्यानेकार्थाभिधानसामर्थ्यातिशयः[10] कल्प्यते । स च न यौगपद्येन । किन्तर्हि ? प्रयोक्त्रभिप्रायेण[11] योऽर्थोऽभिधित्सितस्तदानु-गुण्येनैवावयवार्थकल्पनम् । ततश्च भिन्ननिमित्तोऽपि साधारणशब्द[12] एवेति सिद्धान्तः[13] । अर्थप्रकरणादिना[14] च सर्वसाधारणशब्देषु विशेषाध्यवसाय इत्यलमतिप्रसङ्गेन[15] ।

पशु[16]वर्णविशेषाद्यन्यार्थसाधारण्यप्रसङ्ग[17]निवृत्त्यर्थं स्वरादि[18]नामाह-दिवश्चादित्यस्य च, नामानीति शेषः । यानि त्वस्य आदित्यस्य[19] प्राधान्येन मन्त्रेषु सूक्तहविर्भाञ्जि सवितृसूर्यादीनि तान्युपरिष्टात्[20] दैवते[21] काण्डे व्याख्यास्यामः । स्वरादीनि तु षडपि उभयोर्हवि[22].सूक्तभाञ्जि भवन्ति, अतो नैघण्टुके[23] प्रकरणे इह व्याख्यास्यन्ते[24] ।

आदित्य. कस्मात् ? आदत्ते रसान् भुवो[25] रश्मिभिः । आदत्ते[26] भासम्, तदुदयेऽन्तर्धानादा-दानव्यपदेशः । ज्योतिषां चन्द्रनक्षत्रग्रहादीनाम् । तथा च ब्राह्मणम् । 'उद्यन्तं वा आदित्यम-ग्निरनुसमारोहति[27] तस्माद्धूम एवाग्नेर्दिवा[28] ददृशे'[29] इति । उभयत्र[30] ददातेरादित्यः । आदीप्तो

१-एव कस्मिन् B. C. २-भ्रान्तिः D.
३-धातो० B. C.
४-०दनुमान्य० D. ५-उक्तं B. C.
६-प्रतिपा० C. ७-'न' इति त्रुटितम् C.
८-'धात्व' इति त्रुटितम् B.
९-०त्यसथा अप० C. १०-०वाद्यामि० C.
११-०क्त्र''''''यणार्थे B. ०ये णोऽर्थो० C. ०ण योन्यो भि० D.
१२-०णः श० B. ०णो श० C.
१३-सिद्धम् B. सिद्धः C. १४-'च' नास्ति D.
१५-०त्ययम० B. C. १६-अप इ षण् D.
१७-०रणप्रसंगेन नि० D. ०ण्या B. अग्रे 'प्रसंग नि' इति त्रुटितम् ।
१८-०रादीना० D.
१९-'आदित्यस्य' इति द्विर्लिखितम् C. ०स्य प्रा० B.
२०-तौन्यु० C. नान्यु० D.
२१-[ निरु० १२।१८ ]
२२-दिवश्चादित्यस्य चेत्यर्थः । 'हविः सूक्त' इति त्रुटितम् B.
२३-नैवघ० C. २४-०स्यते B.
२५-भुवा D. २६-'आदत्ते' इति द्विर्लिखितम् D.
२७-०ग्निमनु० C. D. २८-०दी० B C. ०वो D.
२९-[ अनुपलब्धमूलमिदं वचनम् ]
३०-०त्रादाने० D.

भासा[1] इति वा, ज्योतिरन्तरापेक्षया[2] दीप्तः। भासां ज्योतिषाम् इति, आदीप्तो भातीति वा पाठान्तरम्। ज्योतिर्मण्डलात्मनि[3] प्रकाशत इत्यर्थः। अदितेः पुत्र इति वा[4]। 'दित्यदित्या-दित्य'[5] इति ण्यः। तथा च ब्राह्मणम्-"अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो[6] ब्रह्मौदन[7]-मपचत्...तस्यै चत्वार आदित्या अजायन्त' इत्युपक्रम्य 'ततो विवस्वानादित्योऽजायत'[8] इति। एतद्युक्तमुत्पत्त्यभिप्रायेण[9]। शाकल्यात्रेयप्रभृतिभिर्नावगृहीतम्[10], पूर्वनिर्वचनाभि-प्रायेण। गार्ग्यप्रभृतिभिरवगृहीतमिति, तदेव कारणम्[11]। विचित्राः पदकाराणामभि-प्रायाः। क्वचिदुपसर्गविषयेऽपि[12] नावगृह्णन्ति। यथा शाकल्येन 'अधिवासम्'[13] इति नाव-गृहीतम्। आत्रेयेण तु 'अधि वासम्' इत्यवगृहीतम्[14]। तस्मादवग्रहोऽनवग्रह[15] इति। यदेतदुक्तमादित्यशब्दे व्युत्पत्तिनिमित्तकारणम्[16]-अदितेः पुत्रम्-इति। एतन्निर्वचननिमि-त्तमेव शब्दान्तरमेवमर्थम्[17]। आदितेयमिति वेदे प्रयुक्तं दृश्यते किन्त्वल्पप्रयोगविषयोऽस्य[18]। तुशब्दो[19] विशेषणार्थः[20]। अस्य-आदित्यस्य, एतद्[21]-वक्ष्यमाणमभिधानम्। क्व? आर्चाभ्याम्नाये[22] ऋचां समूह आर्चम्[23], अभ्याम्नायत इत्यभ्याम्नायः[24], ऋच एव[25] यजुषा ब्राह्मणेन च मिश्रा[26] आम्नायन्ते आभिमुख्येन[27] यस्मिन्नसावार्चाभ्याम्नायः[28], तस्मिन् ऋग्वेद[29] इत्यर्थः। अन्ये ऋचा-[30]भ्याम्नाय इति पठन्ति। तेषामल्पप्रयोगमेतदभिधानम्, यत एकयैव[31]र्चा प्रदर्श्यते[32]। आम्नाय

१-हासा C.
२-०रापेक्षयाभीद्धो C. राभीद्धो D.
३-ज्योति मण्डलमात्मनि D.
४-'इति वा' इति त्रुटितम् B.
५-[ Fragment of पा० ४।१।८५ ] दित्य इत्यादित्ये B. दित्या दित्ये C.
६-'देवेभ्यो' इति नास्ति D.
७-ब्रह्मोद० C, ब्रह्मोनम० D.
८-[ तै० सं० ६।५।६ ]
९-०द्युत्पत्त्य० C. एत व्युत्प० D.
१०-'भिः नावगृही' इति त्रुटितम् B.
११-तदेतदाकारण C. तदेत का० D.
१२-०ये वि० C. १३-अधी० D.
१४-इत्यत्राव D.
१५-०दर्थाव० B, अग्रे 'ह इति। य' इति त्रुटितम्। ०हो नाव० D.
१६-'निमित्त' इति नास्ति D. १७-०मेवार्थम् B.
१८-०जग विविध० C. किन्त्वल्पः प्रयोग० इत्युचितम्।
१९-तुश० D.
२०-विषयाविशेषार्थः B. ०ब्द विशेषार्थः C.
२१-एव D. २२-'क्व? आर्चाभ्या' इति त्रुटितम् B.
२३-आर्च्यः D.
२४-य इत्यभ्यायः D. ०त्याम्नाय B.
२५-एव द्र य० B. C. २६-मन्त्रा D.
२७-'न' इति त्रुटितम् D. २८-०म्नायुः B. C.
२९-ऋवेद B. ३०-ऋचामभ्या० D.
३१-एतयै D.
३२-'प्रदर्श्यते' त्रुटितम्। प्रदश्यते य C.

एवाम्याम्नाय इति चेद् उच्यते, सर्ववेदेष्वित्युक्तं भवति। सूक्तभाग्भवति, सूक्तं स्तुतिः, तामेव भजते। क्व? 'सूर्यमादितेयम्' इति। न हविर्भाक्, सूर्यपदसामानाधिकरण्यादेतद् गम्यते। गुणाभिधानमेतत्, नानेन नाम्ना हविश्चोदना क्वचिदस्तीति। 'यदेदेनमदधुर्यज्ञियासो दिवि' इत्यत्र व्याख्यास्यते।

अन्ये ऽल्पप्रयोगमित्यादित्यस्यैव वेदे एकवचनान्तस्यादित्यादिविषयस्याल्पप्रयोगतां सूक्तभाक्त्वं चाहुः। यजुर्वेदे ब्राह्मणे चान्तो नास्त्येकवचनबहुवचनान्तानाम्। न केवलमस्यैवादित्यशब्दस्य, आदितेयशब्दस्यापि एकस्यामेव ऋचि, 'सूर्यमादितेयम्' इति। सूक्तभागेव चेति। आदितेयमिति, 'अपवादविषये क्वचिदुत्सर्गो दृश्यते' इति ण्यविषये ढक्। 'प्रदीयतां दाशरथाय मैथिली' इति यथा। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वा ण्यविषये ढक्।

आदित्यशब्दस्य प्रसङ्गेनान्यत्रापि क्वचिदाख्यायतेऽदितेः पुत्रत्वेन। एवमनेनप्रकारेणान्यासामपि देवतानामादित्यशब्देन प्रवादा आदित्यशब्देन स्तुतयो भवन्तीत्यर्थः। तद्यथैतन्मित्रस्येत्यादि, 'इमा गिरः' इत्यत्र व्याख्यास्यते।

१—सर्व C. २—त्वामे० B. C.
३—[ ऋ० १०।८८।११। निरु० ७।२९ ]
४—उच्यते D. ५—'ना' इति त्रुटितम् C.
६—[ ऋ० १०।८८।११ निरु० ७।२९ ]
७—०स्यन्ते C.
८—वेदमेक० B.
९—०न्तं सा० B.
१०—चान्तो नास्येक B. C. अत्र B. पुस्तके 'स्ये' इति 'स्त्ये' इति वा त्रुटितम्।
११—प्रयोग इति शेषः।
१२—'शब्दस्य आदितेय' इति त्रुटितम् D.
१३—'वा' इति नास्ति D. १४—०दित्येय० B. C.
१५—'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' [ प० शे० ५८ ] 'अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते' [ पात० व्या० महा० ७।४।८२ ]
१६—ण्य वि० C. शुभ्रादेः [ पा० ४।१।१२३ ]
१७—[ अनुपलब्धमूलमिदं वचनम् ] 'इति' नास्ति B. C. 'यथा' इति द्विर्लिखितम् B. C.
१८—[ प० शे० ३५ ] 'वा छन्दसि सर्वे विधयो भवन्तीति' [ पात० व्या० महा० १।४।९ ] 'बहुलं छन्दसि सर्वे विधयो भवन्तीति' [ पात० व्या० महा० ३।१।८५ ]
१९—यावण्य वि० B. लावण्य वि० C. 'इति टक्' इत्येव D.
२०—प्रशंसेन C.
२१—०ब्दे प्रसंगेन नान्यत्रापि क्वचिदाख्यापनेऽदि० D.
२२—प्रयोग इति शेषः। २३—०नेक प्र० D.
२४—०नामित्यादि० D. २५—स्यादि तु B.
२६—[ ऋ० २।२७।१ निरु० १२।३६ ]
२७—०यते D.

पृथगर्थमिदं दर्शयति-अथापि मित्रावरुणयोः, आदित्य[1]शब्देन हि स्तुतिः । आदित्या दानुनस्पती-दा[2]नपती ।

ता सम्राजा घृतासुती आदित्या दानुनस्पती । सचेते अनव[3]ह्वरम् ॥

गृत्समद[4]स्यार्षम् । ता[5]-तौ मित्रावरुणौ, सम्राजा-सम्यग्दीप्तावी[6]श्वरौ, घृतासुती-आसुतिर[7]शनं रसो वा घृताशनौ घृतरसौ वा, यद्वा-आसुति[8]रासवः, घृतमेवासवो ययोरित्यर्थः । आदित्या-आदितेः पुत्रौ । दानुनस्पती-दा[9]नुर्दानम, 'दाभाभ्यां [10]नुः' बहुलवचनाद् भावे । तस्याधिपती, अत्यन्तदातारावित्यर्थः । सचेते-लोडर्थे ले[11]ट्, सचेताम्-सेवेता[12]म् । किम् ? सामार्थ्यादस्मद्यज्ञम । कीदृशम् ? अनवह्वरम्, अवपूर्वस्य ह्व[13]रतेरत्तिकर्मणः । अवह्वरो भ[14]क्षः । अनवभक्षितं अन[15]वहिंसितं रक्षोभिरित्यर्थः । अथवा घृतमुदकं वृष्टिलक्षणं त[16]था वा सुवाते प्रेर[17]यतस्तौ घृतासुती, वृष्टिप्र[18]दानद्वारेण सचेते सर्वान् प्राणिनः । अनवह्वरम्-'ह्वृ कौटिल्ये'[19] अकुटिलमृजु, अशाठ्येनेत्यर्थः ।

अथापि मित्रस्यैकस्यादित्यप्रवादा स्तुतिः—

प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन ।

न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात्[20] ॥

विश्वामित्र आह-सः हे मित्र ! मर्तः-मनुष्यः प्रास्तु प्रकर्षेण भवतु प्रयस्वान्-अन्नवान् यस्तु[21]भ्यं हे आदित्य ! अदितेः पुत्र ! शिक्षति ददाति । किम् ? सामर्थ्यात् हविः, व्रतेन कर्मणा यागाख्येन । किञ्च न हन्यते केनचित्, न च[22] जीयते त्वोतः-त्वया ऊ[23]तो रक्षितः, न चैनमंहः

१-'स्य' इति त्रुटितम् B.
२-'दानपती' इति नास्ति C. D.
३-[ ऋ० २।४१।६ ] 'ता सम्राजा० ह्वरम्' इत्येव प्रतीकम् D.
४-०दार्षम् D. ५-'ता' नास्ति B. D.
६-०विश्वरौ C.
७-०ती शेनं B. ०सिशेनं C. ८-०ती आस० D.
९-दानुर्दनुर्दा० B. दानुर्दानुर्दा० C.
१०-[ उणा० ३।३२ ] ददात्या ( दादाभ्या C. ) नुत् बहुवच० B. C.
११-लेट् D. १२-सेवताम् C. सवताम् D.
१३-[ धा० १।९७८ ] परमयं कौटिल्यार्थः । ह्वरतेरन्ति० B. C. १४-अनवह्वरोऽभक्षः D.
१५-'अनवहिंसितं' नास्ति D.
१६-तद्यावासु ( सु C. ) वा० B. C.
१७-०यैते घृतौ घृतासुतौ B. ०त घृतौ घृ० C.
१८-प्रधान० C.
१९-[ धा० १।९७८ ] ह्वर्तौमित्ये B.
२०-[ ऋ० ३।५९।२ ] 'प्र स मित्र मर्तो अस्तु० न दूरात्' इत्येव प्रतीकम् D.
२१-ये तुभ्यं C. २२-'च' इति नास्ति D.
२३-'त्वया ऊतो रक्षितः' इति त्रुटितम् B.

पापमश्नोति व्याप्नोति, अन्तितः समीपात् नापि दूरात्। स्वगतं सम्बन्धिगतञ्चेत्यर्थः। अथवा सन्निकृष्टकाल विप्रकृष्टकालं च, इदानीं कालान्तरे चेत्यर्थः।

अथापि वरुणस्यैकस्य। 'अथा वयम्[1]' इति नियमः। [2]

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय।

अथा वयमादित्य व्रते तवानागसो अदितये स्याम[3]॥

शुनःशेपो यूपे बद्धो वरुणमाह-उत्तमं पाशं हे[4] वरुण! अस्मद्-स्मत्तः, उच्छ्रथय[5] निस्सारयेत्यर्थः। अवाधमं-अधः[6] पाशमित्यर्थ., अवश्रथय:-अवपातयेत्यर्थः।[7] विमध्यमं-मध्येवस्थितं विश्रथय विमुञ्चेत्यर्थः। अथानन्तरं वयं हे आदित्य! अदितेः पुत्र! व्रते यागाख्ये कर्मणि, तव त्वत्सम्बन्धिनि[8] त्वद्देवत्य इत्यर्थः। अनागसः-अपापाः, अदितये-अदितिरिति वाग्नाम[9], वाचे[10] त्वत्स्तुतिलक्षणायै स्याम भवेम[11] त्वां स्तुमो यजेमेत्यर्थः। भेदपक्ष एतत्सर्वं विचार्यते।

नैरुक्तपक्षे तु-अदितिर्द्यौः[12], तस्याः पुत्रः साहचर्याद् रसाहरणाद्वा[13] द्युस्थानो वरुणः। शुनःशेपोऽपि यजमानः सन्नाह। उत्तमम् उत्कृष्टम्, उत्तमे वा वयस्युपजातम्, हे वरुण! दुरितं[14]कर्मपाशमस्मत्त उच्छ्रथय उन्मोचयेत्यर्थः। ऊर्ध्वं एव वयसि श्लथय। अधमं दुरितपाशं बाल्ये वयस्युपजातं तथैवाधमे[15] वयसि। मध्यमञ्च[16] मध्यमे वयस्युपजातं निर्मोचय। अनन्तरं वयं हे अदितेः पुत्र! कर्मणि तव त्वद्देवत्ये, अनागसः, त्वयैव क्षपितकल्मषाः, अदितये वयं स्यामेत्याशास्महे[17]।

निगमप्रज्ञादाह-व्रतमिति कर्मनाम, वृणोतीति। कर्तरि सत[18] इति कृतं[19]व्याख्यानम्। तद्धि शुभमशुभं वा वृणोति बध्नाति कर्तारम्। तथा च श्रुतिः-'तं विद्याकर्मणी[20] सम-

---

१-वा D २-वयव० C.
३-[ ऋ० १।२४।१५ ] 'उदुत्तमं वरुण० स्याम' इत्येव प्रतीकम् D.
४-भो D. ५-श्रथाय B.
६-अधः पा० B. C.
७-'अवश्रथय-अवपातयेत्यर्थः' इति पाठस्त्रुटितः B.
८-०धन्धनि D.
९-वाद नाम ( मा B. ) B. C. १०-वोचे B.
११-इवेम C.
१२-अदिद्यौः C.
१३-रसहर० D.
१४-'कर्म' इति नास्ति D.
१५-'तथैव य' इत्येव B.
१६-'मध्यमञ्च' इति नास्ति D.
१७-अदीनत्वा व० B. अदीनत्वाय वयस्यो मे० C.
१८-स इति B. C.
१९-०त इति व्या० D.
२०-०कर्मणि C.

न्यारभेते पूर्वप्रज्ञा चेति[1]। इदमपीतरद्व्रतम्-गुड[2]लवण[3]क्षयादिविषयनिवृत्तिरूपं कर्म। एत-स्मादेव रू[4]पसामान्यात्। प्रसक्तं व्रतं निरु[5]च्यते-वारयतीति व्रतः, निवृत्तिरूपो हि फलपरस्त-दतिक्रम्य प्रमादात् प्रवर्तमा[6]नं पुरुषं वारयतीति व्रत इत्यन्येषां पाठोऽर्थश्च। व्रतमिति कर्मनाम, निवृत्ति[7]कर्मनाम वारयतीति व्रत इति। व्रतं कर्मोच्यते। कस्मात्[8]? वारयतेः। तद्धि संकल्पपूर्वकं प्रवृत्तिरूपमग्निहोत्रादि कर्म प्रत्यवायं वारयतीति पुरुषः प्रवर्तमानो निवर्तमानश्च प्रकृतेनाभिसम्बन्धः, तेन व्रतेन निवार्यत इति व्रतस्यैव प्राधान्यात् हेतु-कर्तृ[9]त्वेन विवक्षा। भोजन[10]मपि व्रतं क्षुदानिवारणात्।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
त्रयोदशः खण्डः[11]। ]

---

१–[ बृ० उ० ४।४।२ ]
२–गुड० B. C.
३–०क्षियादि० C. ०णादि० D.
४–निवृत्ति सा० D.
५–'०निरु०' इति द्विर्लिखितम् C.
६–०मानां पुरुषः C.
७–०र्मणामा B. 'निवृत्तिकर्म नाम' इति नास्ति D.
८–कस्मावात् C. तस्मात् D.
९–०र्वेर्का C
१०–०जनाम० D.
११–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति।

पापमश्नोति व्याप्नोति, अन्तितः समीपात् नापि दूरात्। स्वगतं सम्बन्धिगतञ्चेत्यर्थः। अथवा सन्निकृष्टकालं विप्रकृष्टकालं च, इदानीं कालान्तरे चेत्यर्थः।

अथापि वरुणस्यैकस्य। 'अर्था वयम्'[2] इति नियमः।

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय।

अथा वयमादित्य व्रते तवानागसो अदितये स्याम॥[3]

शुनःशेपो यूपे बद्धो वरुणमाह-उत्तमं पाशं हे[4] वरुण! अस्मद्-स्मत्तः, उच्छ्रथय[5] निस्सारयेत्यर्थः। अवाधमं-अधः पाशमित्यर्थः[6], अवश्रथयः-अवपातयेत्यर्थः[7]। विमध्यमं-मध्येवस्थितं विश्रथय विमुञ्चेत्यर्थः। अथानन्तरं वयं हे आदित्य! अदितेः पुत्र! व्रते यागाख्ये कर्मणि, तव त्वत्सम्बन्धिनि[8] त्वद्देवत्य इत्यर्थः। अनागसः-अपापाः, अदितये-अदितिरिति वाङ्नाम[9], वाचे[10] त्वत्स्तुतिलक्षणायै स्याम भवेम[11] त्वां स्तुमो यजेमेत्यर्थः। भेदपक्ष एतत्सर्वं विचार्यते।

नैरुक्तपक्षे तु-अदितिर्द्यौः[12], तस्याः पुत्रः साहचर्याद् रसाहरणाद्वा[13] द्युस्थानो वरुणः। शुनःशेपोऽपि यजमानः सन्नाह। उत्तमम् उत्कृष्टम्, उत्तमे वा वयस्युपजातम्, हे वरुण! दुरित[14]कर्मपाशमस्मत्त उच्छ्रथय उन्मोचयेत्यर्थः। ऊर्ध्वे एव वयसि श्लथय। अधमं दुरितपाशं बाल्ये वयस्युपजातं तथैवा[15]धमे वयसि। मध्यमं[16]च मध्यमे वयस्युपजातं निर्मोचय। अनन्तरं वयं हे अदितेः पुत्र! कर्मणि तव त्वद्देवत्ये, अनागसः, त्वयैव क्षपितकल्मषाः, अदितये वयं स्यामेत्या[17]शास्महे।

निगमप्रज्ञादाह-व्रतमिति कर्मनाम, वृणोतीति। कर्तरि स[18]त इति कृत[19]व्याख्यानम्। तद्धि शुभमशुभं वा वृणोति बध्नाति कर्तारम्। तथा च श्रुतिः-'तं विद्याकर्मणी[20] सम-

१-वा D २-वयव॰ C.
३-[ ऋ॰ १।२४।१५ ] 'उदुत्तमं वरुण॰ स्याम' इत्येव प्रतीकम् D.
४-भो D. ५-श्रथाय B.
६-अधः पा॰ B. C.
७-'अवश्रथय-अवपातयेत्यर्थः' इति पाठस्त्रुटितः B.
८-॰बन्धिनि D.
९-वाद नाम ( मा B. ) B. C. १०-वोचे B.
११-हवेम C.
१२-अदिद्यौः C.
१३-रसहर॰ D.
१४-'कर्म' इति नास्ति D.
१५-'तथैव य' इत्येव B.
१६-'मध्यमथ' इति नास्ति D.
१७-अदीनत्वा व॰ B. अदीनत्वाय वयस्यो मे॰ C.
१८-स इति B. C.
१९-॰त इति व्या॰ D.
२०-॰कर्मणि C.

न्यारभेते पूर्वप्रज्ञा चेति[1]। इदमपीतरद्व्रतम्-गुड[2]लवण[3]क्षाराद्विविषयनिवृत्तिरूपं कर्म। एत-स्मादेव रू[4]पसामान्यात्। प्रसक्तं व्रतं निरुच्यते[5]-वारयतीति सतः, निवृत्तिरूपो हि फलपस्त-दतिक्रम्य प्रमादात् प्रवर्तमा[6]नं पुरुषं वारयतीति सत इत्यन्येषां पाठोऽर्थश्च। व्रतमिति कर्मनाम, निवृत्ति[7]कर्मनाम वारयतीति सत इति। व्रतं कर्मोच्यते। क[8]स्मात्? वारयतेः। तद्धि सं[9]कल्पपूर्वकं प्रवृत्तिरूपमग्निहोत्रादि कर्म प्रत्यवायं वारयतीति पुरुषः प्रवर्तमानो निवर्तमानश्च प्रकृतेनाभिसम्बन्धः, तेन व्रतेन निवार्यत इति व्रतस्यैव प्राधान्यात् हेतु-कर्तृत्वेन विवक्षा। भोज[10]नमपि व्रतं क्षुदानिवारणात्।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य त्रयोदशः खण्डः[11]। ]

---

१–[ बृ० उ० ४।४।२ ]

२–शुद्ध० B. C.

३–०क्रियादि० C. ०णादि० D.

४–निवृत्ति सा० D.

५–'०निरु०' इति द्विर्लिखितम् C.

६–०मानां पुरुषः C.

७–०र्मणामा B. 'निवृत्तिकर्म नाम' इति नास्ति D.

८–कस्मादात् C. तस्मात् D.

९–०र्थकां C

१०–०जनाम० D.

११–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति।

## [ अथ चतुर्दशः खण्डः । ][1]

उक्तं प्रासङ्गिकम्। प्रकृतमभिधीयते[2]-स्वरादित्यः। कस्मात्? सु अरणं गमनम्[3], तत्सुखाय हिताय वा[4] शोभनं यस्य। सुखप्रतिपत्त्यर्थो[5] विसन्धिपाठः[6]। सर्वत्र शोभनं वा[7] प्रेरणं तमसां यस्य। सुष्ठु वा ऋतो गतो रश्मिभि रसानादातुम्[8], भासं[9] वा ज्योतिषां नक्षत्रादीनाम्। स्वृतो[10] भासेति, कर्मणि क्त इति वि[11]शेषः। पूर्वत्र[12] कर्तरि। एतेन द्यौर्व्याख्याता। तुल्यनिमित्तत्वात्। तानि चेत् समानकर्माणि समाननिर्वचनानि इत्यस्याः परिभाषायां उदाहरणान्येतानि, अल्पत्वात् स्वयमेव प्रदर्शयति-सा[13]ऽपि सुष्ठु गता शोभनं वा[14] अरणमस्यां शोभनैर्वा[15] पुण्यकृद्भिरर्यते[16]ऽस्यां सुष्ठु वा पुण्यकृत[17] ईर[18]यतीति। तत्र गमनाय स्वृतो[19] रसैः, कर्मणि क्तः, स्वृता[20] भाभिर्ज्योतिषां स्वयमेवो[21]द्दीप्ता।

दिव उदाहरणम्—'भूर्भुवः स्वः'[22] इति।

आदित्यस्य तु[23]—

एभिर्नो अर्कैर्भवा नो अर्वाङ् स्व१र्णज्योतिः।
अग्ने विश्वेभिः सुमना अनीकैः॥[24]

वामदेवस्यार्षम्[25]। एभिर्नः-अस्माकं स्वभूतैरर्कैः स्तूयमान इति शेषः। भवा नः-भव नः-अस्माकम्[26], अर्वाङ्[27]-प्रसादाभिमुखः प्रसादपर इत्यर्थः। स्वर्णज्योरिति[28], आदित्या-

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति।
२—प्रतम० B.
३—मुद्रितमूले पुल्लिङ्गपाठः।
४—'वा' नास्ति D. ५—०पत्त्यै B.
६—पा D.
७—'वा' नास्ति D.
८—०दातुर् B. C. ९—महसां B. महासे C.
१०—स्वस्तृतो C. ११—'वि' इति त्रुटितम् D.
१२—'त्र' इति त्रुटितम् D.
१३—सा वि C. नास्त्येव D.। साऽपि द्यौरपीत्यर्थः।
१४—०भना वा आ० B.
१५—'वा' इति नास्ति B.
१६—०द्भिर्यते स्या B. ०राप्यते D.
१७—०स्तृतां B. C.
१८—'र' त्रुटितम् B. 'य' त्रुटितम् C.
१९—स्मृतो B. C.
२०—स्मृता B. C.
२१—०व दी० D.
२२—[ य० वा० सं० ३।५,३७ ]
२३—'तु' नास्ति D.
२४—[ ऋ० ४।१०।३ ] 'एभिर्नो अर्कैः ०अनीकैः' इत्येव प्रतीकम् D.
२५—०वार्षम् D.
२६—'अस्माकम्' नास्ति D.
२७—अवाक् D.
२८—'इति' नास्ति C. D.

ख्यमिव भास्वर इत्यर्थः[1] । हे अग्ने ! विश्वेभिः सर्वैरनेकै[2]र्ज्वालाख्यैर्मुखैरुपेतैः[3] इत्यर्थः । सुमनाश्च[4] भवेत्यनुषङ्गः । अतियाच्ञया[5] खेदं मायासीरित्यर्थः ।

पृश्निरादित्य[6] इत्यादि । प्राश्नुत एनं शुक्लो वर्णः । संस्पृष्टा[7] रसान्, तृष्णन्तोऽयम्[8] । ततश्च 'न लोकाव्यय'[9] इति षष्ठीप्रतिषेधाद् द्वितीयैव, आदाता रसानित्यर्थः । कृतव्याख्यानमन्यैतत्[10] ।

अथ द्यौः संस्पृष्टा व्याप्ता ज्योतिर्भिः पुण्यकृद्भिश्च । 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि'[11] इति श्रुतेः ।

आदित्यस्योदाहरणम्-'अयं वेनश्चोदयेत्'[12] इति व्याख्यास्यते[13] । दिवः—

अरा इवेदचरमा अहेव प्र प्रजायन्ते अकवा महोभिः ।
पृश्नेः पुत्रा उपमासो रभिष्ठाः[14] स्वया मत्या मरुतः सं मिमिक्षुः[15] ॥

श्यावाश्वो मरुतः स्तौति । अरा इव-यथा अराश्चक्रस्य तुम्बस्य वा तद्वत् । अचरमाः-चरमः[16] पश्चिमः स[17] येषां[18] नास्ति ते अचरमाः । पश्चिमाभावादेवाग्रिमस्याप्यभावः[19], अनग्रिमपश्चिमा इत्यर्थः । अह्ना इव[20]-अहानीव च[21] संवत्सरस्य सहजातत्वाद्धि[22] तुल्यकाला मरुतः, नैषाम्[23]ग्रिमो न पश्चिमोऽप्यस्ति[24] कश्चित् । प्र[25] प्रजायन्ते-एकः प्रशब्दः 'प्रसमुपोद' इति पादपूरणः, अपरः प्रकर्षार्थः, प्रकृष्टा जायन्ते प्रतिदिवसं वर्द्धमानाः प्रकृष्टा भवन्तीत्यर्थः । अकवाः[26]-अकुत्सिताः । महोभिः-स्वैर्माहात्म्यैः[27], पृश्नेः-दिवः पुत्राः, उपमासः[28]-उपमाभूता[29] सर्वस्य ।

---

१–०रमित्य० D. २–०रनेकै० D.
३–'उपेत' इति नास्ति D. ४–'च' नास्ति B.
५–०याशया C. ६–दृदिन० C.
७–संस्पृष्टा C. ८–तृणं तोयं B.
९–[ Fragment of पा० २।३।६९ ]
१०–०ख्यमेतत् D.
११–च न० B, C. [ अनुपलब्धमूलमिदं वचनम् ]
१२–[ ऋ० १०।१२३।१। निरु० १०।३९ ]
१३–'ख्या' इति द्विर्लिखितम् D, '०स्यते । दिवः' इति त्रुटितम् B.
१४–ष्ठाः B. C.
१५–[ ऋ० ५।५८।५ ] 'अरा इवेदचरमा० मिमिक्षुः' इत्येव प्रतीकम् D.
१६–परमः C. १७–'स' इति नास्ति B.
१८–एषां B, C.
१९–०ग्रीमस्याप्यभा० C. ०ग्रसस्या० D. ०मस्य स्वभावः B.
२०–अह्नाव C. 'इ' इति त्रुटितम् ।
२१–'च' नास्ति D. २२–०जाति त्वा० D.
२३–'म' इति त्रुटितं भाति B, C.
२४–०मो वास्ति B, C.
२५–'प्र' इति त्रुटितम् । 'प्रजायते' इत्येव B.
२६–अकपाः C. २७–'महात्म्यैः' इत्येव D.
२८–०मानाः D. २९–०माहूताः C.

अथवा-उपमा इत्यन्तिकनाम, दिवः पुत्राः[1] सन्निकृष्टाश्चेत्यर्थः। रभिष्ठाः-अतिशयेन वेगवन्तः, त्वया मत्या प्रज्ञया। मरुतः संमिमिक्षुः[2] मिक्षतेर्गतिकर्मणः[3]। एतद्रूपं संगच्छते। यादृश्येषां योग्या[4] प्रज्ञा परानुग्रहात्मिका तादृश्येषामुत्पद्येत[5] इत्यर्थः।

अथवा मन्यतेरर्चतिकर्मणो मतिः स्तुतिस्तया संगच्छन्ते स्तोतृभिः स्तूयन्त इत्यर्थः।

नाक आदित्यो भवति। नेता प्रापयिता भासामात्मीयानां सर्वत्र, ज्योतिषां प्रणयो नायक इत्यर्थः। अथवा नेता भासां ज्योतिषां चेति सिद्धम्[6]। अतः[7] प्रणयः-प्रणाशकः, अन्तर्धातेत्यर्थः।

अथ द्यौः। कमिति सुखनाम, तत्प्रतिषिद्धमकं[8] दुःखं, पुनः प्रतिषिध्यते, सुखमेवेत्यर्थः। सुखस्यानत्वाच्च[9] सुखमित्युच्यते। प्रतिषेधद्वयोपनिपाते[10] प्रकृत एव गम्यत[11] इति। अस्मिन्नर्थे ब्राह्मणं पठित्वा व्याचष्टे[12]—

'न वा अमु लोके जग्मुषे किंचनाकम्[13]। नैवा[14] अमुं लोकं गवतते किश्चनासुखमिति[15]। कुतः[16]? पुण्यकृत एव यस्मात्तत्र गच्छन्ति। न च पुण्यकृतां[17] दुःखभवनं युक्तम्। ननु च यत्र सुखं दुःखेनापि[18] तत्र भवितव्यम्। तथा च श्रुतिः-'न ह[19] वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति'[20] इति? उच्यते। सुखबाहुल्याद्दुःखं नास्तीत्युच्यते। नावेदविदस्मिन्[21] ग्राम इति यथा। उदाहरणम्-'नाकस्य पृष्ठे'[22] इति व्याख्यातम्। 'तस्मिन्नहं नि दधे नाके अग्निम्[23]' इत्यादि।

---

१-'पुत्राः' इति नास्ति B. C.
२-असं मि० B. C.
३-मक्षते० B. म्यक्ष्यतिरिति गतिकर्मसु निघण्टौ पठितः। धातुपाठे नास्त्ययं धातुः।
४-'योग्या' नास्ति D. ५-०मुपलभ्यत B.
६-प्रसिद्धः D.
७-इत्थं प्रकाशोन्तर्धातेत्यर्थः D.
८-'अकं' नास्ति B.
९-'सु' इति त्रुटितम् B.
१०-०निवाने C.
११-गम्य B.
१२-द्रुपाचष्टे B. दाचष्टे C. अत्र 'तद्व्याचष्टे' इति पाठो भवेत्।
१३-[ काठ० सं० २१।२ ] इदं मूलवाक्यं नास्ति C. D. cf. तै० सं० ५।३।७।१ सुवर्गो वै लोको नाको'''नास्मा अकं भवति। cf. मै० सं० ३।३।१ नाकं ह्वा अस्मा'''न वै तत्र किंचन जग्मुषेऽकम्।
१४- न वाऽयं लोके C. १५-नो सु० B. C.
१६-'कुतः' इति नास्ति D, १७-०कृताः C.
१८-तत्र दुःखेन नापि D. १९-भू D.
२०-[ छा० उ० ८।१२।१ ]
२१-'विद' इति त्रुटितम् C.
२२-[ऋ० १।१२५।५]
२३-[य० वा० सं० १५।४९॥तै० सं० ४।७।१३।३] अग्निम् C.

गौरादित्यो भवति[1]। गमयति रसान् मण्डलं प्रति रश्मिभिः। गच्छति वा मध्यमस्थये। अथ द्यौः[2]। यत्पृथिव्या उपरि दूरं गता। 'उमादः पुरुषं'[3] इत्यादित्यस्योदाहरणम्। दिवः-'गवामसि गोपतिः'[4] इति।

विष्ठादित्यो भवति। आविष्टो रसान्[5]। विष्ठादित्यः[6] पृथिव्या रसानादातुमाविष्टोऽभिनिविष्ट[7] इत्यर्थः। एवमेव भासां ज्योतिषाम्। भासा वा व्याप्तः। द्यौरप्येवम्। 'गोदो[8] ब्रध्नस्य विष्टपम्'[9] इत्युदाहरणम्।

नभ आदित्यः। नयतेः। अपि वा भनं[10] एव स्याद्विपरीतः। भासनः सन्नोकारस्य[11] ह्रस्वत्वेन सलोपेन च भनैः[12], भनः[13] सन् नभः। न न भातीति वा, नकारलोपेन नभः। न न भाति भात्येवेत्यर्थः[14]। एतेन द्यौर्व्याख्याता। 'ज्योतिष्मती प्रतिमुञ्चते नभः'[15] शुक्रं[16] ऋतुपभा[17] नभसा इत्युदाहरणम्[18]।

इति स्कन्दस्वामिकृतायां निरुक्तटीकायां
सप्तमस्या-(द्वितीयस्या-) ध्यायस्य
चतुर्थः पादः[19]।

---

[ चतुर्दशश्च खण्डः
समाप्तः[20]। ]

---

१–गौरादिः C. 'भवति' इति नास्ति D.
२–'अथ द्यौः' इति त्रुटितम् D.
३–[अनुपलब्धमूलमिदं वचनम्] 'उमादः' नास्ति D
४–[ ऋ० ७।९८।६ ] हवामसि C. B.
५–इदं मूलवाक्यं नास्ति C. D.
६–०वश्चादि० C. ७–०सिन वि० C.
८–हासा C. 'भासा' इत्यत आरभ्य 'इत्युदाहरणम्' इत्यन्तः पाठो नास्ति D.
९–[ ऋ० ९।११३।१० ] 'गोदो' इत्यस्य स्थाने वेदे 'यत्र' इति पाठः।
१०–दन B. C. ११–सन् भास्वलेन D.
१२–नभः B. C. D. १३–नभः B. C.
१४–०त्येवे वेत्ये० D.
१५–[ तै० सं० ४।३।११।२ मै० सं० २।१३।१०। का० सं० ३९।१० ]
१६–उत B. उक्र C. १७–यम भाभानन्नभसा B.
१८–ज्योतिष्मतीत्यादिरयं पाठो D. पुस्तकेऽत्र नास्ति प्रत्युत 'गौरादित्य' इति प्रकरणे 'एवमेव भासां ज्योतिषां' इत्यतः परस्ताद् विद्यते। तत्रत्यश्चोचितः पाठस्तत्र नास्ति।
१९–अत्र D. C. पुस्तकयोः पादादिसमाप्तिनिर्देशो नास्ति
२०–आदर्शपुस्तकेषु खण्डसमाप्तिनिर्देशो नास्ति।

# [ अथ पञ्चमः पादः ।[23]

## पञ्चदशः खण्डः । ]

रश्मिनामानि साधारण्यप्रसङ्गादाह-खेदय इत्यादीनि पञ्चदश । रश्मिर्यमनादित्यर्थकथनमेतत्[1], न धातुप्रदर्शनम्[2] । रशेरेव रश्मिः । रशना[3] रश्मिरिति कतिपयप्रयोगविषय[4] एवायं रशिः, रहेत्यादिवत्[5], न सर्वत्र, बन्धनप्रतीतेर्यमनादित्याह-एकत्रोदकस्या[6]परत्रादर्शनाम्[7] । तेषामाद्यौ साधारणानि पञ्चदशरश्मिभिः । प्रदर्शनश्चैतत् । अभीशु-दीधिति-शब्दावङ्गुलिभिः । एवम्[8]न्येषामपि द्रष्टव्यम् ।

आदित्यसम्बन्धित्वेनैव[9] दिङ्नियमादाह-दिङ्[10]नामान्युत्तराण्यष्टौ । दिशतेः[11] । आदिश्यन्ते[12] हि ता[13] आदित्येन । अतिसृष्टा वा तं समर्थं प्रति आशदनाद्वा[14], शदिर्गत्यर्थः[15] । अभ्यशनाद्वा व्यापातनाद्वा[16] । दिशतेरेवार्थनिदर्शनमिति केचित्[17] ।

तत्र काष्ठा इत्येतदनेकस्या[18]पि द्रव्यस्य वाचकं[19] भवति । दिशस्तावत्, क्रान्त्वा सर्वमतीत्य स्थिताः, आकाशवत्[20], व्यतिरेकपक्षे । अव्यतिरेकेऽपि त एव शब्दादयः सर्वत्र सन्ति संस्थिता[21]श्चेति । उपदिशोऽप्येवमेव, अव्यतिरेकेऽपीतरेतरापेक्षया परत्वापरत्ववत्[22] सर्वत्र व्यवहारास्तित्वम् । आदित्योऽप्युदयगिरेः क्रान्त्वास्तगिरावदर्शनात् स्थित

---

१—०ना एवमदि० C.
२—धातु शब्द प्र० B. C.
३—रशेन B.
४—प्रय प्रयो० B. C.
५—इत्या० D.
६—०दास्या० B. C.
७—०श्वाना० C.
८—'एवम्' नास्ति C. अस्य वाक्यस्य स्थाने B. पुस्तके 'एवमादीन्येषामपि द्रव्यस्य वाचकं भवति द्रष्टव्यम्' इति पाठो वर्तते ।
९—०बन्धत्वे० B. C.
१०—वाइ D.
११—अतिसर्जनार्थस्य दिशः सैः B.
१२—आश्यन्ते B.
१३—एताः C.
१४—आदश ( 'सद' इत्यपि B. ) नाद्वाद B. C.
१५—शनिर्ग० B.
१६—'व्यापातनाद्वा' नास्ति D.
१७—कांचित् D.
१८—०तदपरत्वादने० B.
१९—मुद्रितपुस्तकेषु 'द्रव्यस्य वाचकं' इत्यस्य स्थाने 'सत्वस्य नाम' इति पाठो वर्तते ।
२०—०शाद्व्यति० B.
२१—'सं' इति नास्ति D.
२२—'वत्' इति त्रुटितं भाति C.
२३—आदर्शपुस्तकेषु पादखण्डारम्भनिर्देशो नास्ति ।

उच्यते[1] । आज्यन्तः[2] शरपथपर्यन्तः[3] काष्ठोच्यते । अत[4] एवापोऽपि द्विप्रकाराः काष्ठाः । स्थावरा[5]स्तावत्-गत्वा जलाशयं समुद्रादिं स्थिता भवन्ति । सर्वत्र[6] निगमा द्रष्टव्याः । अयनस्वभावा[7]प्रक्रमादिषु[8] चास्थावराणां न क्वचित्तिष्ठन्तीति काष्ठाः । निगमः ।

[ इति सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य
पञ्चदशः खण्डः[9] । ]

---

१—इत्युच्यते D.
२—आदित्यः D. अजयतदछर० C.
३—०धान्तः B.
४—अक ए० C.
५—०रां स्ता० B. ०रा स्था० C.
६—०त्र हि नि० D.
७—स्वसा C.
८—०दिला स्था D.
९—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति ।

# [ अथ षोडशः खण्डः । ][14]

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ।
वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ॥[1]

हिरण्यस्तूपस्यार्षम्[2] । चलत्वाद्[3] तिष्ठन्तीनां बहुत्वादनिवेशनानां काष्ठानामपां मध्ये स्थितानामिति शेषः । यद्दिनिहितं शरीरं वृत्रस्य मेघस्य निण्यं निर्णामं[4] यतोऽधो नीचैर्नमति तं बिलमित्यर्थः । विचरन्ति विजानन्ति, सर्वे गत्यर्था ज्ञानार्थाः, आपः । सोऽपि निर्गच्छन्तीस्ताः प्रवरुन्धन्[6], दीर्घन्तमः-धूमनीलं मेघशरीरम्, आशयत् आशेते आतिष्ठति[7] । दीर्घेण तमोरूपेण कृत्स्नं नभो[8] व्याप्नोतीत्यर्थः । इन्द्रशत्रुः-इन्द्रस्य शत्रुः शातयितव्यः[9] । शरीरं सामान्येन निराह शृणातेः, हिंस्यते हि तत् । शम्नातेर्वा[10], शाम्यति हि तत् कालेन । दीर्घम्-द्राघतेर्वृद्ध्यर्थस्य[11] । तमस्तनोतेः,[12] विस्तीर्णं हि तदात्मना । शमयिता[13] शातयिता वेति धात्वन्यत्वमात्रम्, अर्थस्तूभयत्र[14] मारणमेव ।

१–[ ऋ० १।३२।१० ] 'अतिष्ठन्तीना० इन्द्रशत्रुः' इत्येव प्रतीकम् D.

२–०पार्षम् D. ३–पल० C.

४–हिरण्यं C. ५–बल० B.

६–अवरु० C.

७–'चलत्वादति०' इत्यारभ्य 'आतिष्ठति' इति पर्यन्तः पाठस्त्रुटितः D. पुस्तके । अस्य स्थाने दुर्गवृत्तिनाम्ना कश्चन पाठ उद्धृतो वर्तते । स चेयम्-"दुर्गवृत्तौ-'न तिष्ठन्तीत्यतिष्ठन्त्यः । तासामतिष्ठन्तीनां मेघोदरान्तर्गतानामपाम् । ता हि मेघे गच्छति गच्छन्त्येव तदाधारत्वात् । अनिवेशनानामनिविशमानानाम् । न हि ताः क्वचिन-( नि- ) विशन्ते यावज्जलाशयं नाप्नुवन्ति । तासामेवंविधानां काष्ठानां मध्येऽवस्थितानां वाप्यतो मेघाख्यं निहितमवस्थापितं धात्रा शरीरमोऽन्यापस्तासामेव गुप्तये । ताः पुनर्वृत्रस्य मेघस्य निण्यं निर्णामं येनासौ नीचैर्नमति तं प्रदेशं विजानन्ति ( 'न्तीव' मु० पा० ) यतस्तेन प्रदेशे ( न ) विचरन्ति । निम्नानुसारिण्यो हि ताः । असावपि वृत्रस्तासु प्रक्षरन्तीषु तत्प्रक्षरणनिरोधं चिकीर्षुः स्वशरीरवृद्ध्या दीर्घन्तमः । स हि तमः स्वत एव धूमादिप्रभवत्वात् । यावत्तं प्रदेशं निम्नं बिलमनुसरन्त्यः मेघस्य तं (?) निःसरन्ति । ततो बहुतरमसौ वर्धते तद्वरु-( रु ) त्सया । एवं दीर्घं तम आशयत् आशेते' एवं दुर्गः"।

८–भा B. C. ९–०तव्यम् B.

१०–हिंसार्थस्यैव [धा० ४।९२] । वस्तुतस्त्वयं नैघण्टुको धातुः । शम्नातिर्वधकर्मसु निघण्टौ पठितः ।

११–[ धा० १।११७ ]

१२–विस्तारार्थस्य [ धा० ८।१ ]

१३–'शमयिता' नास्ति D. १४–०स्तु यत्र D.

१५–आदर्शपुस्तकेषु खण्डारम्भनिर्देशो न विद्यते ।

वृत्रशब्दस्य[1] निगमप्रसक्तस्याभिधेयं प्रति विप्रतिपत्तिः[2], तन्निर्णिनीषया[3] प्रश्नयति[4] तद् को वृत्र इति । त्वाष्ट्रोऽसुर इत्यैतिहासिकाः[5] । सर्वे इतिहासाश्चार्थवादमूलभूताः[6] । ते चान्यपरा विधिप्रतिषेधशेषभूताः[7] । अतस्ताननादृत्य स्वयमविरुद्धं नित्यदर्शनमुपोद्बलयन्नाह[8] मेघ इति नैरुक्ताः । कथं तर्हि मन्त्रेषु ब्राह्मणेषु च सलिलसंघातमात्रात्मकेन वृत्रेण सह युद्धप्रवादाः ? उच्यते, अपाश्चेत्यादि । अपां रश्मिभिराहृतानां घनीभूतानां[9] वायुनावष्टब्धानामभिहन्यमानानां[10] परस्परसंघर्षे तदुशाखयोरिवाग्निरुपजायते, ततस्तेनोपतप्तानां[11] विलयनं[12] भवति[13] । तासां ज्योतिषश्च वैद्युतस्योद्भूतवृत्तेः[14] प्रतिद्वन्द्विभावान्मिश्रीभूतयोस्तत[15] एव मिश्रीभवनकर्मणो वर्षकर्म विलयनाच्यवते[16], न[17] ह्यविलीनमुदकं[18] स्रवति । न च तेजोऽन्तरेण विलयनमस्ति । तत्र मुख्ययुद्धसम्भवाभावादौपचारिकी उपमालक्षणार्थेन युद्धवर्णना[19] । किं सादृश्यम् ? संघर्षः[20] । तस्मादसति युद्धे कल्पनैषा[21] । तथा च कल्पितरूपा मन्त्रवर्णा मन्त्रलिङ्गाः[22] ।

रूपं रूपं मघवा बोभवीति[23] ।
मायेत्सा ते यानि युद्धान्याहुः[24] ।
इन्द्रो दिवः[25] ।
यदाव इन्द्र ते शतम्[26] । इति

तेषामेको निरुक्तेन व्याख्यातव्यः[27] । स व्याख्यायते—

१—०शब्द० C.
२—'विप्रति' इति द्विर्लिखितम् C.
३—०'र्णि' इति त्रुटितम् D. ४—प्रश्न इति D. C.
५—'इति त्वाष्ट्रोऽसुर' इति त्रुटितम् B.
६—०मूलाः B. C.
७—'०षेध' इति त्रुटितम् D.
८—निदर्श० B. C. 'त्र' इति त्रुटितम् ।
९—संघातीनां घनीभू० D.
१०—विष्टब्धाना० D.
११—०स्तानो० C.
१२—०ल्लिला० B.
१३—विलयं D.
१४—'वैद्युतस्योद्भूतवृत्तेः' नास्ति B. C.
१५—०द्वन्द्व एवाग्नि० B. द्वन्द्वीभावमि० D.
१६—'वि' इति नास्ति B. C.
१७—ना ( न C. ) प्यवि० B. C.
१८—'उदकं' त्रुटितं भाति B. C.
१९—०वर्णनां B. C.
२०—वर्षसं० D.
२१—०देल्पेनै० B. C.
२२—'मन्त्रलिङ्गाः' नास्ति B. C.
२३—[ ऋ० ३।५३।८। ]
२४—[ ऋ० १०।५४।२ ]
२५—[ ऋ० १०।८९।१० )
२६—[ ऋ० ८।७०।५ ]
२७—व्याख्यातः B. C.

यदचरस्तन्वा वावृधानो बलानीन्द्र प्र ब्रुवाणो जनेषु।
मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से ॥[1]

बृहदुक्थस्य वामदेवस्यार्षम्। यदचरः-चरसि[2], तन्वा शरीरेण, वावृधानो वर्धमानः[3], बलानीन्द्र स्वसामर्थ्यानि प्रब्रुवाणः कथयन्निव जनेषु, चतुर्थ्यर्थे सप्तमी, जनेभ्यः। माया, इदिति पदपूरणः, सा ते तव अनृतं तदित्यर्थः। यानि युद्धान्यैतिहासिका आहुः, तान्यपि मायैव। यतो नाद्य इदानीम्, शत्रुं प्रथमार्थे द्वितीया, तच्छ्रुतेश्चास्तीति शेषः[5]। शत्रुर्नास्तीत्यर्थः। नापि पुरा यानि[6] युद्धान्यैतिहासिकाः[7], तान्यपि पुरातनश्च[8] त्वमपि विवित्से वेत्स्येव न के[9]वलोऽहम्।

अथवा, विवित्से इति विदेर्लाभार्थस्य रूपम्, नेदानीं शत्रुं लभसे, नापि पुरा। ततश्च केन सह युद्धमिति। किं वृत्रवदेव ?[11] न, अहिवत्-अहिशब्देनापीत्यर्थः[12]। मन्त्रवर्णा[13] ब्राह्मणवादाश्च भवन्ति—

अहन्नहिमन्वपस्ततर्द[14]। तथा—

अभिवृत्राणि[15]। इति।

ऐतिहासिकपक्षे एको वृत्रः, कुतो बहुत्वम् ? नैरुक्तपक्षे त्वदोषः। विवृद्ध्या शरीरस्येत्यादि, निगदव्याख्यातम्[16]। ब्राह्मणमपि चास्मिन्नर्थे दृश्यते-'स इषुमात्रं[17] विष्वङ्ङ्वर्धत'[18] इति। एतदर्थाभिवादिनी एषा ऋग्भवति।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य षोडशः खण्डः[19] ]

---

१-[ ऋ० १०।५४।२ ] 'यदचरस्तन्वा० विवित्से' इत्येव प्रतीकम् D.
२-०स्य वार्षम् C. ३-चरसी C.
४-'वर्धमानः' मुद्रितम् D.
५-तच्छ्रुतं ना० ( र्ना० C. ) B. C.
६-यापि B. C. यान D.
७-आहुरिति शेषः। ८-०तनत्त्व B.
९-'न के' इति मुद्रितम् B.
१०-[ धा० ६।१३८ ]
११-'एव ? न' मुद्रितम् D. १२-आदिश० D.
१३-मन्त्रा ब्रा० B. C.
१४-[ ऋ० १।३२।१ ]
१५-[ ऋ० ६।१६।३४ ] १६-०ख्यानम् D.
१७-'इषुमात्रं' इति द्विर्लिखितम् C. 'विष्वङ्' इति नास्ति D. विस्पन्द व० C.
१८-[ तै० सं० २।५।२।२ ]
१९-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।




## [ अथ सप्तदशः खण्डः । ][1]

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥[2]

हिरण्यस्तूपस्यार्षम्[3] । दासः कर्मकरः श्रान्त उपक्षीणशक्तिः, तं धीतश्रम[4]व्यावृत्तिकरणेन[5] पालयन्तीति[6] दासपत्न्यः । अथवा-दासो मेघः, तस्य पालयित्र्यः, ताभिर्हि[7] मेघो भवति, तत्कृतं तस्य मेघत्वमित्यर्थः[8] । अहिगोपाः-अहिर्मेघो गोपायिता यासां[9] ताः । अतिष्ठन्-तिष्ठन्ति, तेन निरुद्धा आपः पणिनेव वणिजेव विक्रयार्थं[10] व्रीह्यादौ[11] गावः, तासामपां निर्गमबिलम्, अपिहितं घट्टितं[12] यदासीत्, वृत्रं मेघं जघन्वान्, अपतद्ववार अपावृतवान् तदिन्द्रः ।

दासो दस्यतेः, उपदासयति कर्माणि उपक्षयति कर्माणि । क्षय आन्तं गमनम् । एवं हि तत् क्षीणं भवति । यदन्तं नीतम्[13], अर्थार्थत्वात् प्रवृत्तेः[14] । अन्यथा पुनः प्रवर्तेत एव । अहिरयनात्-गमनात्, एति गच्छत्यन्तरिक्षे । अयमपीतरोऽहिः सर्प एतस्मादेव[15] एतेः । असावपि हि भूम्यामेति[16] । यद्वा आहन्ति भोगेनेत्याहिः[17] सन् उपसर्गह्रस्वत्वेन अहिः । पणिर्वणिगित्यभिधेयवचनम् । पणनादिति शब्दनिर्वचनम् । क्रयविक्रयव्यवहारः पणनम् । पर्यायप्रसङ्गा[18]दाह वणिग् वन्यं वननीयं[19], पण्यं नेनेक्ति शोधयति, क्रयविक्रयः स्यादिति । बिलं भरं बिभर्तेः बिलं[20] बिभर्ति हि तदुदकादि । वृत्रो वृणोतेराच्छादनार्थस्य[21], आच्छादयति ह्यसौ शस्त्रं

---

1–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
2–[ ऋ० १।३२।११ ] 'दासपत्नी० ववार' इत्येव प्रतीकम् D.
3–०पार्षम् D.
4–०श्रम० D.
5–०करेण D.
6–'इति' नास्ति D.
7–०भिर्निर्मेघो D.
8–०र्थः त्व० B.
9–गामताः B. C.
10–०र्थे C. ०थार्थे D.
11–व्रीह्यादौ B. C.
12–उद्घटितं D. अत्र 'अनुद्घटितं' इति युक्तः पाठो भवेत् ।
13–०न्तर्वी० B.
14–प्रवृत्तिः D.
15–एकस्मा० C.
16–मि B.
17–०त्यादि स० D.
18–'पर्याय' इति त्रुटितम् D.
19–वनयीयं D.
20–भरं यत् बि० B.C.
21–[ धा० ५।८ ]

नभः। वर्ततेर्वा[1] गत्यर्थस्य[2], गच्छति ह्यसौ नभः। वर्धतेर्वा[3] वृद्ध्यर्थस्य। ब्राह्मणदृष्टास्त्रयो[4]ऽपि निर्वचनप्रकारा इति दर्शयति-'यद्दिमांल्लोकानावृणोत् तद्वृत्रस्य वृत्रत्वमिति विज्ञायेते[5]। यथा[6] यदवर्तयत् तथा इषुमात्रमवर्धत[7]' इति।

इति स्कन्दस्वामिकृतायां निरुक्तवृत्तौ[8]
सप्तमस्या-(द्वितीयस्या-) ध्यायस्य
पञ्चमः पादः।

---

[ सप्तदशः
खण्डः[9] ]

---

१–निघण्टौ वर्ततिर्गतिकर्मसु पठितः।
२–गर्थस्य B.
३–[ धा० १।७९६ ]
४–०णं दृष्टवास्त्रयो० D.
५–"विज्ञायते' नास्ति B. C.
६–तथा D.
७–[ cf. तै० सं० २।५।२।२ ]
८–टीकायां D.
९–आदर्शपुस्तकेपु खण्डसमाप्तिनिर्देशो न विद्यते

# [ अथ षष्ठः पादः ।

## अष्टादशः खण्डः । ][1]

रात्रिनामान्युत्तराणि द्विङ्गनामभ्यश्च[1]पोविंशतिः । आदित्यनिमित्तत्वसम्बन्धात् । दिनसम्बन्धैः श्यामवर्णा । श्यावीत्यादि प्रतिनाम[2] निर्वचनम् । ऊधरिति सन्दिग्धेषु, निर्णयोदाहरणम्-'यो अस्मै घ्रंस'[3] । इति । अहःसाहचर्यादर्थसामान्याच्च रात्रिरिति गम्यते । एवं[4] सर्वत्र । अर्थादेशप्रसक्तं निर्वचनम्-रात्रिः कस्मात् ? इति । प्ररमयति प्रक्रीडयेति भूतानि नक्तञ्चराणि कौशिकपिशाचादीनि । उपरमयति कर्मभ्य इतराणि दिवाचराणि । ध्रुवीकरोती-त्यर्थवचनम् । प्रोपविष्टस्य[6] रमेः[7] रात्रिः । रातेर्वा[8] दानार्थस्य स्यात् । अत्र हि रूपसिद्धिला-घवमर्थपौष्कल्यञ्च[9] । प्रदीयन्तेऽस्यां मध्यमेन[10] अवश्यायाः[11], अवश्यमायन्तीत्यवश्यायास्तुषारा[12][13] इत्यर्थः, ते हि रात्रौ निर्वर्तन्ति । रातेर्दानार्थोपपत्तिवचनम्[14] ।

रात्रिसम्बन्धादुषोनामानि षोडश, विभावरीत्यादीनि । उषाः कस्मात् ? उच्छतीति सत्याः । उच्छेलिर्विवासे[15], विवासनादुषाः । रात्रेरपरः काल इत्यभिधेयकथनम्[16] । नास्मात्परं रात्र्यवयवोऽस्ति पञ्चदशो मुहूर्तः । तं[17] केचिदहर्भागं मन्यन्ते । केचिद्रात्रिभागम् । केचिदुभयसाधारणम् । केचिदुभयव्यतिरिक्तम्[18] । यथा चायं रात्रेरपरस्तथैव एषा श्रुगमयति ।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
अष्टादशः खण्डः । ][19]

---

१-दिसम्ब० D. ०म्बन्धा D.
२-०नामानि B. C. ३-[ ऋ० ५।३४।३ ]
४-एव एवं B. C. ५-'ङ' इति त्रुटितम् D.
६-०विषयस्य D. अत्र 'प्रोपसृष्टस्य' इति समीचीनः पाठो भवेत् ।
७-रामे B. C.
८-[ धा० २।४८ ] ९-० त्यन्वात् D.
१०-०यने B. C. ११-'मध्यमेन' नास्ति D.
१२-०श्यायविप्रुषः B. C.
१३-अवश्यमायन्तीत्यादिरयं निपतन्तीत्यन्तः पाठो न दृश्यते B. C.
१४-०नार्थस्य पत्ति० D.
१५-उच्छ विवासे C. D. 'तिर्' इति त्रुटितं स्यात् । धातुपाठे तु 'उच्छी विवासे' [ धा० १।२३१ ] इत्येवं दृश्यते । १६-वचनम् D.
१७-ताश्च B. तच्च C. १८-०तिरेकम् D.
१९-आदर्शपुस्तकेष्वत्र खण्डप्रारम्भसमाप्तिनिर्देशो नास्ति ।

# अथ चतुर्थः पादः ।[1]

सृप इत्यनवगतम् । सर्पणादिति निर्वचनम् । सर्पतीति सर्पण इत्येवं प्राप्ते सृप्रः । इदमपीतरदिति सृप्रशब्दस्य[2] क्रियानिमित्तत्वात् सर्पिरादावपि वृत्तिं दर्शयति । एवं चानेकार्थत्वमपि[3] । विशेषावगतिस्तु पदान्तरसम्बन्धसामर्थ्याद् द्रष्टव्या । तुल्येऽपि च क्रियायोगे रूढिर्व्यवच्छेदिकेत्याह सर्पिर्वेति । उदाहरणम्—

बृहदुक्थं हवामहे सृप्रकरस्नमूतये ।
साधु कृण्वन्तमवसे[4] ॥

व्याख्यातः[5] शेषो बृहदुक्थप्रसङ्गेन[6] । करस्नाविति बाहुनामसु[7] पठ्यमानस्यैव निर्वचनार्थमुपदेशः[8] । कर्मणां प्रस्नातारौ[9] 'वेष्टृ वेष्टने'[10] वेष्टयितारौ कर्तारावित्यर्थः ।

सुशिप्र इत्यनवगतम् । तत्पुनरेतेन[11] सृप्रेण व्याख्यातम् । सृप्रेणेवादित्यापत्यादिना सुशिप्रशब्दो द्रष्टव्य इत्यर्थः । हनू नासिके वेत्यभिधेयमाचष्टे ते[12] ह्यन्न गन्धं च प्रति सृप्तौ[13] भवतः । ते[14] शोभने यस्य सः[15] सुशिप्रः[16] । उदाहरणम्—

विद्मा सखित्वमुत शूर भोज्य१मा ते ता वज्रिन्नीमहे ।
उतो समस्मिन्ना शिशीहि नो वसो वाजे सुशिप्र गोमति[17] ॥

अयमप्युक्तशेषः समस्मिन्निर्त्यत्र[18] प्रसङ्गेन । यदुक्तं शिप्रे इत्युपरिष्टाद् व्याख्यास्याम[19] इति तदिदं व्याख्यातं हनू नासिके वेति[20] । अभिधेयप्रसङ्गेन[21] हनुनासिकाशब्दौ[22] निराह । हन्यते[23] जिह्वया संगृह्यमिति हनुः । नासिका नसतेर्गतिकर्मणः । यद्वा नसतिर्नमतिकर्मा[24] वा ।

---

१—अयं सर्वोऽप्यध्यायपादारम्भात्मकः पाठो नास्ति C.
२—सृपशब्द B. C.
३—'पि' इति त्रुटितम् C.
४—[ ऋ० ८।३२।१० ] 'बृहदुक्थं ( त्थं C. )' इत्येव प्रतीकम् B. C.
५—'ख्या' इति त्रुटितम् B. C.
६—[ निरु० ६।४ ] बृहदुक्थ B. C.
७—[निघ० २।४] ८—र्थमुपदेशः B. C.
९—प्रस्तो (स्ता C.) तारौ B. C.
१०—[धा० १।२५६] वेष्ण वेष्टने C.
११—'न' इति त्रुटितम् B.
१२—'ते' इति नास्ति B. C.
१३—सृप्तो B. स्तृतो C. १४—अ शोभने B.
१५—स्तः B. स्त C. स्ते' इति युक्तं स्यात् ।
१६—सुशिप्राः B.
१७—[ ऋ० ८।२१।८ ] 'विमा ( द्मा ) सखित्वम्' इत्येव प्रतीकम् B. C.
१८—[ निरु० ५।२३ ] १९—[ निरु० ४।१० ]
२०—अनू ( नु B. ) नासिके चेति B. C.
२१—अभिधप्रसंगसम्बन्धु C.
२२—अनुनासिकशब्दो B.
२३—सन्दिग्धमिदं वाक्यम् ।
२४—निर्गतिकर्मा B. C.

गच्छति प्राप्नोति वा गन्धं प्रति नमतीति वा नासिका। शिप्रशब्देन क्वचित् हनुः क्वचिन्नासिका सामर्थ्यात् क्वचिदुभयमभिधीयत इति। एतद्विषयप्रदर्शनायोदाहरणमप्याह—

मादयस्व हरिभिर्ये त इन्द्र वि ष्यस्व शिप्रे वि सृजस्व धेने।
आ त्वा सुशिप्र हरयो वहन्तूशन्हव्यानि प्रति नो जुषस्व॥

कुत्सस्यार्षम्। मादयस्व मादय तर्पयेत्यात्मानम्। स्वार्थे वा णिच् तृप्य वा। हरिभिरश्वैः सह ये ते तव स्वभूताः हे इन्द्र। केन प्रकारेण ? उच्यते। विष्यस्व शिप्रे स्यतिरुपसृष्टो विमोचने शिप्रे अपि हनू इहोच्येते हविर्भक्षणाय हनू विमुञ्च प्रेरयेत्यर्थः। विसृजस्व धेने धाने इत्यस्यार्थो यथा भाष्यकारेणोक्तो दधातेर्धेनेति जिह्वोपजिह्विके इहापि ते ताभ्यां हि पीयेते निधीयते चरतस्तयोरिति जिह्वोपजिह्विके अपि रसास्वादनाय विसृज प्रेरयेत्यर्थः। आकारो वहन्तु इत्येतेन सम्बध्यते। तदर्थे च त्वा त्वां हे सुशिप्र अत्र विकल्पेन समुच्चयेन चाभिधानम्। सुहनुः सुनसो वा शोभनोभये वा हरय आवहन्तु आनयन्तु। आनीतश्च सन् उशन् कामयमानोऽस्मदीयानि हव्यानि हवींषि भक्षय प्रति नो जुषस्व प्रतिसेवस्व नोऽस्मानभिलषितफलप्रदानेन। क्वचित्तु पदान्तरसम्बन्धसामर्थ्यात् शिप्रशब्देन शिरस्त्राणमुच्यते। 'शिप्रः शीर्षस्सुवितता हिरण्मयी' इति। सुशिप्रः सुशिरस्त्राण इत्यर्थः संभवति।

रंसु इत्यनवगतम्। रमणादिति निर्वचनम्। वर्णलोपादिना। रमणीयेष्वित्यर्थः। उदाहरणम्—

आ यन्मे अभ्वं वनदः पनन्तोशिग्भ्यो नामिमीत वर्णम्।
स चित्रेण चिकिते रंसु भासा जुजुर्वा यो मुहुरा युवा भूत्॥

सोमाहुतेरार्षम्। आ इत्ययं पनन्तेत्येतेन सम्बध्यते। यदिति व्यत्ययेन पुंस्थाने

१—मभिधेयमिति B.
२—[ ऋ० १।१०१।१० ] 'मादयस्व' इत्येव प्रतीकम् B. C.
३—तर्पयित्मानम् C. ४—हरिभिर्थै C.
५—हेइन्द्र B. C. *—'०होच्येने' इति युक्तम्
६—धने B. C. ७—'तेर्धेने' इत्येव B. C.
८—जिह्वौप ( व C. ) जिह्वने ( के C. ) B. C.
९—ताभ्याः ( भ्यः ) C.
१०—वीयते B. C.
११—अपहन्तु B. C. १२—पुत्र B. C
१३—घयो ( नो C. ) भिधानं B. C.
१४—'सुहनुः' इति द्विर्लिखितम् C.
१५—'शो' इति द्विर्लिखितम् C. 'शोभनोभयो' इति युक्तम्।
१६—मुच्यके C. १७—[अनुपलब्धमूलमिदम् ]
१८—अमरणादिति B. C.
१९—[ ऋ० २।४।५ ] 'आ यन्मे अभ्वं (अभ्रं C) इत्येव प्रतीकम् B. C.
२०—वनन्ते B. C.
२१—'न' इति त्रुटितम् C. २२—य इति B.

नपुंसकताः । मे मम स्वभूताः सामर्थ्याद् ऋत्विजः । अभ्वं महान्तो वनदः ऋत्विग्विशेषणमेतत्, वननीयस्य हविषो दातारः । आपनन्त इति मध्यमः प्रथमार्थे । वनतिः स्तुतिकर्मा । आभिमुख्येन स्तुवन्ति । यश्च उशिग्भ्यः मेधाविनाम, एषा विभक्तिः षष्ठ्याः स्थाने । यद्वोर्वा उशिजः कामिन उच्यन्ते । तेषां मेधाविनां कामिनां वा । नोमिर्मीत मिनातिर्वधकर्मा न हिनस्ति वर्णं वरणं प्रार्थनां यथाप्रार्थितमर्थं ददातीत्यर्थः । स चित्रेण व्यत्ययेनेदं नपुंसकं स्त्रीलिङ्गस्य स्थाने । विचित्रया विचित्रया चिकिते ज्ञायते रंसु रमणीयेषु सर्वत्र चन्द्रादिषु दार्वात्मना । सप्तमीश्रुतेः स्थित इति शेषः । भासा दीप्त्या यश्च इन्धनक्षयात् जुर्णिः जीर्णः । मधुमहोदक्षणेनैव आकारः पदपूरणः, इन्धनमासाद्य पुनः तरुणो भूद् भवति ।

द्विबर्हा इत्यनवगतम् । द्वयोरित्याद्यर्थवचनम् । द्विपरिवृढ इत्यवगमः, एकं ज्योतिरिति कृत्वा मध्यमे वैद्युतात्मना उत्तमे आदित्यात्मना । अयमपि पुरस्तात् उदाहरणम्—

महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग् वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥

अमिन इत्येतत्प्रसङ्गेन व्याख्यातम् ।

अक्र इत्यनवगतम् । आक्रामत्याक्रम्यते वेति आक्रमण इत्यवगमः । आक्रनिर्वचनम् । प्राकारोऽभिधेयः । उदाहरणम्—

अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः ।
उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः ॥

विश्वामित्रस्यार्षम् । अक्रो न प्राकारः परचक्रं धारयति तद्वत् । बभ्रिः

---

१—नपुंसतता B. एतत्पदानन्तरं B. पुस्तके 'मेणि' इति C. पुस्तके च 'मे त्रि' इत्यविरः पाठो वर्तते । कदाचिदत्र 'ये हि' इति स्यात् ।
२—अभ्वं B. C.
३—'तिः स्तुः' इति मुद्रितम् C.
४—उशीभ्यः B. C.   ५—धाविनाम्नः B. C.
६—उशीजः B.
७—'ममी ( मिम B. ) त' इत्येव B. C
८—विश्रेण B.   ९—भावात्मना B.
१०—दीप्या C.
११—'न् जुजुर्वान्' इति मुद्रितम् B. C.
१२—अयं पाठः सन्दिग्धः । अत्र कदाचित् रक्षणेनैव' इति पाठः स्यात् ।
१३—तरुणमभूत् B. C.
१४—'द्वि' इति नास्ति निरुक्तमुद्रितमूलपुस्तके ।
१५—[ऋ० ६।१९।१] 'इमां इन्द्रो नृवत्' प्रतीकम् B. C.   १६—[निरु० ६।१]
१७—अकं C.   १८—गत्यक्रम्य B. C.
१९—[ऋ० ३।१।१२] 'अ ( आ B. ) क्रो न बभ्रिः' ( हिः C.) इत्येव प्रतीकम् B. C
२०—यद्दिः B. बद्दिः C.
२१—भिमु ( रू C. ) स्तारुधी B. C

वाध्र्यश्वस्यार्षम् । यं त्वा पूर्वस्मिन्नपि काले ईडितो व्यत्ययेनायं कर्तरि, ईडितान्ते तव वध्र्यश्वो नामाहमृषिः समीधे समिन्धितवान् सन्दीपितवान् । हे अग्ने स इदमुपकल्पितं हविः स्तोत्रं वा जुषस्व सेवस्व । स नः स एव चास्माकं गोपाः 'अग्नौ प्रास्ताहुतिः' इत्यनेन प्रकारेणापां यज्ञानां पालयिता । उत अपि च भव अस्य तनूपा शरीराणां पालयिता । दात्रं दानं च रक्षस्व रक्ष । कतमद्दानमेतत् ? यदिदं ते तव स्वभूतम् । अस्मे चतुर्थ्याः शे आदेशः, अस्मदर्थं सर्वदा देहि अस्मभ्यं मा कदाचिदपि न देहि इत्यर्थः ।

जबारु इत्यनवगतम् । जवमानरोहीत्यादयोऽवगमाः । उदाहरणम्—

तमिन्न्वे॒३॒व स॑म॒ना स॑मा॒नम॒भि क्रत्वा॑ पुन॒ती धी॒तिर॑श्याः ।
स॒सस्य॒ चर्म॒न्नधि॒ चारु॒ पृश्ने॒रग्रे॑ रु॒प आरु॑पितं॒ जबा॑रु ॥

वामदेवस्य । तमिं इन्नु पादपूरणौ । तमेव प्रकृतं वैश्वानरमुत्तमस्थानम् । समना समानयोश्चात्तदनुरूपेत्यर्थः, समानयोग्यमेव । अभ्युपसर्गोऽश्या इत्येतेन सम्बध्यते । क्रत्वा कर्मणा तत्परिचर्याख्येन पुनती । कम् ? सामर्थ्यादस्मानेव । कासौ ? धीतिर्मतिरस्म-दीया प्रज्ञा । अभ्यश्याः व्यत्ययेनायं प्रथमस्य स्थाने मध्यमः, अभ्यश्याद् व्याप्नुयात् तत्त्वतो जानीयादित्यर्थः । पुरस्तात् तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यस्य स्वभूतं जबारु इति सम्बन्धः । ससस्य सुप्तोपममेतत् । योऽयं निश्चलत्वात् सस इव 'सस स्वप्ने' सुप्त इव । कः? असावसौ ज्योतिरादित्यलोकः । तस्य पृश्नेरपि उपरि चर्मन् चरेरौणादिको मनिन् । तद-र्थात् 'सुपां सुलुक्' इत्येवं तादर्थ्यचतुर्थ्या लुग्द्रष्टव्यः । चर्मणे चरणाय उदयास्तमय-

लक्षणाय चारु दीप्तम्, अग्ने प्रथमं सृष्टिकालं तव रूपं रिपं इत्यस्य पृथिवीनाम्नश्छान्दस इकारस्य उकारः पर्यायान्तरं वा पृथिवील आरोपितं देवैर्जैवैल जवरूपया गत्या जरयद्वा प्राणिनो वयो गिरन् वा रसान् रश्मिभिर्यदारोहति नभस्तदादित्यमण्डलम् ।

जरूथमित्यनवगतम् । जरूथमिति गृणातेर्धातोर्गतिकर्मणः । जरतेर्वा एवमर्थस्यैवार्चतिकर्मसु पाठात् । 'जूवृभ्यामूथन्' इत्यौणादिक ऊथन् भावसाधनः करणसाधनो वा बाहुलकाद् द्रष्टव्यः । जरूथमिति नेदमवगतप्रदर्शनार्थम् । अस्यैवौणादिकत्वेन छान्दसत्वाविशेषात् । स्तुत्यप्रदर्शनार्थं तु गृणातेरुपक्षेपः । अवगमस्तु जरणं गरणमिति वा द्रष्टव्यम् । स्तोत्राभिधेयम् । उदाहरणम्—

त्वामग्ने समिधानो वसिष्ठो जरूथं हन्यक्षि राये पुरन्धिम् ।
पुरुणीथा जातवेदो जरस्व यूयं पात स्वस्तिभिः सदा नः ॥

वसिष्ठस्यार्षम् । त्वं हे अग्ने समिधानः सन्दीपयन् वसिष्ठो नाम ऋषिरात्मन एवायं परोक्षरूपेण जरूथं स्तोत्रं हन् हन्तेरन्तर्नीतण्यर्थस्य लङ्यडभावश्छान्दसत्वात्, अहन् गमितवान् गमयति वा स्तुतवान् स्तौति वेत्यर्थः । एतज्ज्ञात्वा राये धनाय यक्षि यज पुरन्धिं बहुकर्माणं बहुप्रज्ञं वा । कम् ? सामर्थ्यादात्मानं देवगणं वा पुरुणीथा स्तुतिस्ततस्तृतीयाया लुक्, बह्व्या च स्तुत्या हे जातवेदो जातधन जातप्रज्ञ वा जरस्व स्तूयस्व स्तुहि देवान् । किञ्च यूयं पात एकस्यैव पूजनार्थे बहुवचनम् पाहि । स्वस्तिभिरविनाशैः सर्वदा सर्वकालं नोऽस्मान् ।

कुलिश इत्यनवगतम् । वज्रनामेत्यभिधेयवचनम् । कूलशातन इति शब्दसमाधिः कूलशातनः कुलिशः । मेघस्य पर्वतस्य वा समुच्छ्रिताः प्रदेशाः कूलानीव शातन तेषाम् । उदाहरणम्—

---

१–रिव B. C. २–जपाद B. C.
३–'रूप' इति त्रुटितम् C.
४–पितोः पयः B. ५–जृणाते B.
६–[ निघ० ३।१४ ]
७–[ उणा० २।६ ] जम्प्र ( जूं C. ) इत्यामूठन् B. C.
८–ऊठन् B. C. ९–गदङमिति C.
१०–'त' इति त्रुटितम् C. अत्र 'अवगम' इति स्यात् ।
११–[ ऋ० ७।९।६ ] 'त्वामग्ने' इत्येव प्रतीकम् B. C.
१२–नामामृषिः C.
१३–उपायं B. १४–जरूठं C.
१५–पूरणी वा B. C.
१६–अत्रायमकारोऽधिक एव ।
१७–स्तुनि C. १८–यूरं C.
१९–एतस्यैव B.
२०–अविनाशै B.
२१–मिधेयम् (वः C.) अभिधे B. C.
२२–कुशाशा B. C.
२३–म (C.) कुलानीव B. C.
२४–तेषाम् C.

## [ अथ अष्टादशः खण्डः । ]

तुञ्जे तुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः ।
न विन्धे अस्य सुष्टुतिम् ॥

मधुच्छन्दसः । तुञ्जे तुञ्जे दाने दाने । कस्य ? सामर्थ्याद् धृष्टैर्धनानां वा ये उत्तरे पूर्वेभ्यः प्रकृष्टतराः स्तोमा मदीया इन्द्रस्य वज्रिणः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तैरपि न विन्धे विदेर्लाभार्थस्येदं रूपम्, न लभे । अस्येन्द्रस्य सुष्टुतिं तैरपि नाशेषानिन्द्रगुणान् प्रकाशयितुं शक्नोमीत्यर्थः । एतदुक्तं भवति येऽपि दानपरितुष्टस्य ममात्यन्तमहान्तः स्तोमास्तेपीन्द्रस्य गुणैकदेशवर्तिनः समस्तगुणप्रकाशनमप्राप्ताः किं पुनरन्य इति ।

वर्हणा इत्यनवगतम् । परिवर्हणेति धात्वर्थकथनम् । धात्वर्थश्च वृद्धिर्हिंसा वा । निवर्हतेर्वधकर्मसु पाठात् । वृद्ध्यर्थस्य वृहेर्भूते कर्तरि ल्युट्, परिवृन्द्धः प्राप्तो महत्वो-वर्हणा । ततस्तृतीयैकवचने वर्हणेति प्राप्ते तृतीयायाः 'सुपां सुलुक्पूर्वसवर्णा' इत्याकारः । हिंसार्थे वा भावे ल्युट्, वर्हणं ततः पूर्ववद् विभक्तेराकारः । अतो वर्हणमित्यवगमः । सर्वथा वर्हणा इत्यनवगतम् । उदाहरणम्—

अर्चा दिवे बृहते शूष्यं १ वचः स्वक्षत्रं यस्य धृषतो धृषन्मनः ।
बृहच्छ्रवा असुरो वर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः ॥

सव्यनामापन्नस्येन्द्रस्यार्षम् । अर्चेतिः सामर्थ्यादुच्चारणार्थः । आत्मन एवायमन्तरात्मना प्रैषः । अर्च उच्चारय हे अन्तरात्मन् । दिवे बृहते तादर्थ्ये एते, दीप्तस्य महतश्चेन्द्रस्या-शूष्यं शूषं बलं ततो निमित्तार्थे यद् बलस्य निमित्तं बलवृद्धिकरमित्यर्थः । किं तत् ? वचः स्तुतिलक्षणम् । स्तूयमाना हि देवता वीर्येण वर्धत इति । उच्चारय प्रापय शूष्यं वच इति यस्येन्द्रस्य । किम् ? उच्यते । स्वक्षत्रम् इत्यपठितमपीह बलनाम द्रष्टव्यम् । स्वकर्म बलं न पराश्रितं यस्य तदन्यपदार्थः । यस्येन्द्रस्य धृषतः परानभिभवतो धृषद् धृष्टं प्रगल्भं मनो यः

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १।७।७ ] 'तुञ्जे तुञ्जे' इत्येव प्रतीकम् B. C.
३–'दाने' इति त्रुटितम् C.
४–वरेः B.
५–विन्दे B.
६–सुष्टु किं B.
७–परिकृष्टस्य C.
८–वर्हिणा C.
९–वर्धि B.
१०–[ निघ० २।९ ]
११–भूति B.
१२–वर्हण C. अयं पाठः सन्दिग्धः ।
१३–[ पा० ७।१।३९ ]
१४–इत्यकारः B. C.
१–[ ऋ० १।५४।३ ] 'अर्चा दिवे' इत्येव प्रतीकम् B. C.
२–स्येन्द्र यस्य B C.

अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।
स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक् पृथिव्याः ॥

हिरण्यस्तूपस्यार्षम् । अहन् हतवान् वृत्र मेघं वृत्रनामानं चासुरम् । वृत्रतरं वर्ततेर्गत्यर्थस्य रूपम्, अतिशयेन वर्तारम् । व्यंस विगतांसं विच्छिन्नसर्वाङ्गसन्धिबन्धनमित्यर्थः । व्यंसनामानं वापरमसुरम् । कः ? इन्द्रो वज्रेण । कीदृशेन ? महता वधेन वधकेन नित्यं हन्त्रा । अथवा हननमेव वधः प्रहारो वज्रस्तस्य करणं वज्रेण महता प्रहारेण हतवान् हतश्च सन् स्कन्धासीव वृक्षाणां स्थूला अधोभागायताः शाखा जायन्ते ते स्कन्धा उच्यन्ते, तानि यथा स्कन्धांसि विवृक्णा विविधं छिन्नानि सन्ति तद्वत् । अहिरभिर्वोऽयंतेः । अभिगन्ता वृत्राख्यो व्यंसाख्यश्चासुरः शयने शेतिरिह स्थानार्थः । आमाशयो जलाशय इति यथा । कथम् ? उपपृक् पृथिव्या उपेत्येव समिल्येतस्य स्थाने समर्चिता पृथिव्यां भूमौ पतितस्तिष्ठतीत्यर्थः । हतो हि सन् मेघं उदकरूपेण भूमौ पतितस्तिष्ठति । स्कन्धो वृक्षस समास्कन्नं खमुपश्लिष्टं वृक्षे । इदमपीतरत् प्रास्यावयवरूपं काये आस्कन्नैत्वात् इति । असुनप्रत्ययान्तः स्कन्धशब्दोऽस्ति । स्कन्धशब्दश्चाकारान्तः प्रसिद्धः । उभयं प्रदर्शितम् ।

तुञ्ज इत्यनवगतम् । तुजेर्हिंसार्थस्य चलनार्थस्य वा । वज्रोऽपि तुञ्ज उच्यत इत्याह तुञ्जतेर्दानार्थस्येति संवात्यर्थस्यावगमं दर्शयति । तुजिर्हिंसायां तुजिश्चलने चेति पठ्यते । तेनास्य दानार्थत्वमगमयति । त्रितभावे रूपमुपपन्नमेव । उदाहरणम्— ।

[ इत्येकादशस्या- ( षष्ठस्या- ) ध्यायस्य
सप्तदशः खण्डः ][23]

—————

१–[ ऋ० १।३२।५ ] 'अहन्वृत्र' इत्येव प्रतीकम् B. C.
२–अहनवान् C. ३–सर्वांशसन्धि B. C.
४–'वं' इति त्रुटितम् B.
५–वधकेह B C. ६–कारणं B.
७–कन्धांसीव B. C.
८–स्थूलः अधोभागायतः B. C.
९–अमतेः B. १०–अहिगन्ता C
११–उपपृक् B. C.
१२–मेघा ( घ C. ) देक B. C.
१३–समास्कन्धं C. १४–पीतरः B पीतरं C.
१५–प्रास्यवयव C. अत्र कदाचित् 'आस्यावयव' इति वा पाठो भवेत् ।
१६–स्कन्धस्थान B. स्कन्धस्वात् C.
१७–असुन् B. असुत् C.
१८–कारान्तः अन्तः प्रसिद्धः B. C.
१९–'ना' इति द्विर्लिखितम् C.
२०–साधात्व B. C.
२१–नेनास्या (स्या० B.) B. C.
२२–'गमः य' इत्येव 'ति' इति त्रुटितम् C.
२३–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ अष्टादशः खण्डः । ]

तुञ्जे तुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः ।
न विन्धे अस्य सुष्टुतिम् ॥

मधुच्छन्दसः । तुञ्जे तुञ्जे दाने दाने । कस्य ? सामर्थ्याद् वृष्टिधेनानां वा ये उत्तरे पूर्वेभ्यः प्रकृष्टतराः स्तोमा मदीया इन्द्रस्य वज्रिणः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तैरपि न विन्धे विदेर्लाभार्थस्येदं रूपम्, न लभे । अस्येन्द्रस्य सुष्टुतिं तैरपि नाशेषानिन्द्रगुणान् प्रकाशयितुं शक्नोमीत्यर्थः । एतदुक्तं भवति येऽपि दानपरितुष्टस्य ममात्यन्तमहान्तः स्तोमास्तेपीन्द्रस्य गुणैकदेशवर्तिनः समस्तगुणप्रकाशनमप्राप्ताः किं पुनरन्य इति ।

बर्हणा इत्यनवगतम् । परिवर्हणेति धात्वर्थकथनम् । धात्वर्थश्च वृद्धिर्हिंसा वा । निबर्हतेर्वधकर्मसु पाठात् । वृद्ध्यर्थस्य वृहेर्भूते कर्तरि ल्युट्, परिवृद्धः प्राप्तो महत्वोपेतः बर्हणा । ततस्तृतीयैकवचने बर्हणेति प्राप्ते तृतीयायाः 'सुपां सुलुक्पूर्वसवर्णा' इत्याकारः । हिंसार्थे वा भावे ल्युट्, बर्हणं ततः पूर्ववद् विभक्तेराकारः । अतो बर्हणमित्यवगमः । सर्वथा बर्हणा इत्यनवगतम् । उदाहरणम्—

अर्चा दिवे बृहते शूष्यं वचः स्वक्षत्रं यस्य धृषतो धृषन्मनः ।
बृहच्छ्रवा असुरो बर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः ॥

सव्यनामापत्यस्येन्द्रस्यार्षम् । अर्चेतिः सामर्थ्यादुच्चारणार्थः । आत्मन एवायमन्तरात्मना प्रैषः । अर्च उच्चारय हे अन्तरात्मन् । दिवे बृहते तादर्थ्य एते, दीप्तस्य महतश्चेन्द्रस्याशूर्ध्य शूषं बलं ततो निमित्तार्थे यद् बलस्य निमित्तं बलवृद्धिकरमित्यर्थः । किं तत् ? वचः स्तुतिलक्षणम् । स्तूयमाना हि देवता वीर्येण वर्धत इति । उच्चारय प्रापय शूष्यं वच इति यस्येन्द्रस्य । किम् ? उच्यते । स्वक्षत्रम् इत्यपठितमपीह बलनाम द्रष्टव्यम् । स्वक्षत्रं बलं न पराश्रितं यस्य तदन्यपदार्थः । यस्येन्द्रस्य धृषतः परानभिभवतो धृषद् धृष्टं प्रगल्भं मनो यः

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—[ ऋ० १।७।७ ] 'तुञ्जे तुञ्जे' इत्येव प्रतीकम् B. C.
३—'दाने' इति मुद्रितम् C.
४—यष्टेः B. ५—विन्दे B.
६—सुष्टु किं B.
७—परितुष्टस्य C.
८—बर्हिणा C. ९—बर्धि B.
१०—[ निघ० २।१९ ] ११—भूति B.
१२—बर्हण C. अयं पाठः सन्दिग्धः ।
१३—[ पा० ७।१।३९ ]
१४—इत्याकारः B. C.
१—[ ऋ० १।५४।३ ] 'अर्चा दिवे' इत्येव प्रतीकम् B. C.
२—स्येन्द्र यस्य B. C.

संबलेन शत्रून् प्रत्ये न कुतश्चिन्मनसा बिभेतीत्यर्थः। येन च वृहच्छ्रवा रथी हि पः इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। वृहच्छ्रवाः श्रव इति धननाम महाधनोऽसुरो वृत्रोऽन्यो वा शम्बरः। वर्हणा वृहिर्वृद्धयर्थः, इन्द्रस्यैवेदं विशेषणं प्राप्तमहिम्ना परिवृद्धेनेन्द्रेण । अथवा निवर्हयतेर्वर्हणा हिंसोच्यते। तेन कृतः। कदा कृतः? उच्यते। पुरो हरिभ्यां प्राग् हरिभ्यां प्राप्ते दूरस्थेनैव सतेत्यर्थः। कीदृशः कृतः? उच्यते । वृषभो वर्षिता रुधिरौघस्य सर्वतः क्षारयन् क्षतजं व्रणजमित्यर्थः। न चैतत् सुकरम्। यतो रथी हिशब्दो यस्मादर्थे यस्माद्रथ ईहिता प्रतिमुखमभिगन्ता स अत्यन्तशूर इत्यर्थः।

ततनुष्टिरित्यनवगतम्। ततो नुत्रमित्यवगमः। ततो धर्मसन्तानात्प्रिहोत्रादेः कर्मणो नुन्नोऽपेतः। ततो नुन्नः सन् ततनुष्टिः । अथवा ततन् इत्येतत् शब्दरूपं तनोतेर्भोगसन्तानं वा। उष्टिशब्दो वशेः कान्तिकर्मणः। भोगसन्तानं वष्टीति ततनुष्टिः। विषयभोगसन्तानकाम इत्यर्थः। उदाहरणम्—।

[इत्येकादशस्या-(षष्ठस्या-) ध्यायस्य
अष्टादशः खण्डः]

---

१—'न' इति नास्ति B. 'न' इति नास्ति C.
२—'ते' इति त्रुटितम् B. C.
३—दूरस्तेनैव B. C.
४—उच्यन्ते C.
५—दारयन् C.
६—प्रणज C. * 'सोऽस्य-' इति युक्तम्।
७—ततुष्टिमित्यन C.
८—'नु' इति त्रुटितम् C.
९—अपेतः C.
१०—उषिशब्दो B. C.
११—ततनुष्टिम् B. C.
१२—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

# [ अथ एकोनविंशः खण्डः । ]

यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह।
अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः ॥

संवरणस्य प्रजापतेः पुत्रस्यार्षम्। यो यजमानः। अस्मै इन्द्राय। घ्रंसे वैत वा य ऊधनि ऊधनीति रात्रिनाम रात्रौ सोमं सुनोति सर्वदा यजत इत्यभिप्रायः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। स भवति द्युमान् दीप्तिमान् ऐश्वर्ययुक्त इत्यर्थः। अहेति पदपूरणो विनिग्रहार्थीयो वा एवार्थे, भवत्येव दीप्तिमान्। अन्यस्तु शक्रः शक्तं इन्द्रः। ततनुष्टिं ततोनुष्टधर्मान् इन्द्रियविषयभोगसन्तानकामं वा अपाप ऊहति 'प्रसमुपोदः' इत्येवमेतच्छान्दसत्वाद् अपशब्दस्यापि पादपूरणे द्विर्वचनम। अपोहति सर्वतोऽपनयति विनाशयतीत्यर्थः। तनुशुभ्रं स्वस्यास्तन्वाः स्रगनुलेपनादिभिः शोभयितारम्। मघवा यः कवासखः कुशब्दस्यायं 'कव-ञ्चोष्णे' इति सखिशब्दे कवादेशश्छान्दसत्वाद् द्रष्टव्यः। कुसखा स्वयं भोगप्रवृत्तो दृष्टप्रसाधनसखायोऽपि तस्य भोगप्रधाना एव न यागशीला इत्यर्थः।

घ्रंस इति पठ्यमानस्य निर्वचनार्थ उपक्षेपः। रसा अवश्याया आदित्येन। रात्रिशब्दनिर्वचनार्थं प्रसिद्धं तावदाह गौरूधः प्रसवकाले अङ्गान्तरेभ्य उच्छ्रिततरं भवति। यद्वा उपश्लिष्टमुद्धृतमुद्धृतमिव केनचित्। ततस्त्वसौ रसानुप्रदानसामान्याद् रात्रिरप्यूध उच्यत इति निर्वचनार्थ उपक्षेपः पठ्यमानस्यैव। ततनुष्टिशब्दार्थप्रदर्शनमलंकरिष्णुमित्यादि। तनुं शोभयितारमिति पाठः। कपूयाः पापाः।

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२—[ऋ० ५।३४।३] 'यो अस्मै ('स्मै' नास्ति)' इत्येव प्रतीकम् B. C.
३—वरुणस्य B.
४—घ्रंसे B. C.
५—अथवा B. C.
६—'ऊधनि' इति त्रुटितम् B.
७—भवि C.
८—पादपूरणे B.
९—अन्यन्तु C.
१०—शक्रः B.
११—'त' इति त्रुटितम् B. C.
१२—धर्मात् C.
१३—[पा० ८।१।६] प्रसमुपोद (पोदम C.) B. C.
१४—अपिशब्द B. C.
१५—पदपूरणे B. C.
१६—मेघवा भवान् यः कवासुखः B.
१७—[पा० ६।३।१०७] के चोष्णे B. C.
१८—कुसखः C.
१९—पि यस्तस्य B. C.
२०—घृंस B. घृंस्य C.
२१—ततस्त्वो C.
२२—रात्रिरप्यूध B. C.
२३—ततुष्टि B. C.

इलीबिश इत्यनवगतम् । इलाबिलशय इत्यवगमः । इलो बलमन्नं तन्निष्पत्ति-हेतुभूतमुदकमवेलाशब्दवमायेण इलाशब्देनोच्यते । बिले उदके शेते इति बिलशयः सन् वर्णव्यापत्तिलोपादिना इलीबिशः । मेघोऽभिधेयः उदाहरणम्—

न्यविध्यदिलीबिशस्य दृळ्हा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः ।
यावत्तरो मघवन् यावदोजो वज्रेण शत्रुमवधीः पृतन्युम् ॥

हिरण्यस्तूपस्य कस्यचिदार्षम् । न्यविध्यद् निकृत्य विद्धवान् कस्य ? इलीबिशस्य मेघस्य दृळ्हा दृढानि दुर्भेद्यानि । कानि ? सामर्थ्यादुदकनिर्गमबिलानि । तं शृङ्गिणं शृङ्गिणीति उच्छ्रतो नामधेयं दीप्तिमन्तमित्यर्थः । व्यभिनद् विविधं भिन्नवान् । शुष्णं बलनामेदं सामर्थ्याच्चान्तर्नीतमत्वर्थं द्रष्टव्यम् । बलवान् । कः ? इन्द्रः कस्यचिद् बलान्युदघट्टितवान् । कंचित्तु शलशर्करं भग्नवानित्यर्थः ।

परोऽर्धर्चादिः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् । यावद् यत्परिमाणं तरः बलनामेदं स्वसेनालक्षणं बलं हे मघवन् यत्परिमाणं च ओजः शारीरलक्षणं बलम् । यावदिति श्रुतेः साकाङ्क्षत्वात् तावच्छब्दोऽध्याहार्यः । तावता सर्वेण वज्रेण च स्वशत्रुमवधीः छान्दसत्वाद् वर्तमाने लुङ् जहि । अस्मदीये वा पृतन्यु संग्रामेम् ।

किमेधा इत्यनवगतम् । किमेधा क्रममाणा इति वार्वेगमः । कियद्ध्यपरिमितं स्वबलं धारयति । क्रममाणं चाभिमुखं परबलं धारयति निरुणद्धीति दधातेर्विचि रूपम् । इन्द्रो विशेष्यः । उदाहरणम्—

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
एकोनविंशः खण्डः । ]

---

१–इलीबिश C. २–इलाबिशया C.
३–उभेलाशब्द B. अयं पाठः सन्दिग्धः ।
४–इलीबशः C
५–[ऋ० १।३३।१२] 'न्यविध्यत' इत्येव प्रतीकम् B. C.
६–चिन् ता B. चित् ताव C.
७–विघतान B.
८–'कस्य' इति त्रुटितम् B.
९–र्धर्चेद प्रत्य C.
१०–परिमाणो B C. ११–तरं B.
१२–शारीरलक्षणं B.
१३–तावतः B. तोरत C.
१४–संग्रामकाम C.
१५–कियन्धा B. C. 'कियधाः' इति सविसर्गः पाठो युक्तः ।
१६–इति वा वेत्यवगमः B. C.
१७–कियत्परि B. कियद्वेपरि C.
१८–निरुणन्धीति C. १९–विशेष्यम् B.
२०–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ विंशः खण्डः । ][1]

अस्मा इदु प्र भरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः ।
गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥[2]

नोधस आर्षम् । अस्मै इदु पदपूरणौ, प्रभर प्रहर[3] तूतुजानः क्षिप्रनामेदं त्वरमाणः । हिंसार्थो वा तुजिः, हिंसन् । वृत्राय वधाय[4] एनं वृत्रं हन्तुं क्षिप्रं वज्रं क्षिपेत्यर्थः । ईशानः कियेधाः प्रत्यक्षकृतोऽयं मन्त्रः । अव्यतिरिक्तप्रातिपदिकार्थप्रथमान्ते चैते । अतो यत्तच्छब्दावध्याहृत्य एकवाक्यतां नेये । यस्त्वमीशान ईश्वरः कृत्स्नस्य जगतः कियेधाश्च कियतोऽप्यविज्ञायमानं परिमाणस्य बलस्य धारयिता महाबल इत्यर्थः । स प्रहर वज्रमिति । प्रहृत्य च गोर्न पर्व विरदा यथा नौ[5] गोविकर्ता गोः पर्व अवयवं विच्छेत्, तद्वत् विरद विछिन्द्धि[6] मेघमित्यर्थः । तिरश्चा तिरश्चीनम्[7] । इष्यन्नर्णांसि 'इष गतौ'[8] सामर्थ्याच्चेहान्तर्नीतण्यर्थो द्रष्टव्यः, गमयन्नुदकानि[9][10] । अथवा इच्छतेरेवायं व्यत्ययेन श्यन् विकरणम्[12] इच्छन्नुदकानि[11] । अपां चरध्यै भुवं प्रैति[13] चरणाय[14] न ह्यविकृत्ते[15] मेघे तदन्तर्गता आपो भुवं गन्तुं प्रतिसमर्था[16] इति ।

भूमिरित्येतदनवगतम् । भ्राम्यतेरिति धातुनिर्देशः । भ्रमणमित्यवगमः[18] । भ्रमिता स्वयं भ्रमितान्येषामित्यर्थः । उदाहरणम्—

इमाममे शरणिं मीमृषो न इममध्वानं यमगाम दूरात् ।
आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम् ॥[19]

हिरण्यस्तूपस्य । अत्रेतिहासः-हिरण्यस्तूपो यागायाग्निं विहृत्य रक्षोभयाद्[20] दूरं[21]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ ऋ० १।६१।१२ ] 'अस्मा इदु प्र ( व B. प C. )' इत्येव प्रतीकम् B. C.

३–प्रहरतु प्रहर B. C.

४–'ध' इति त्रुटितम् B. C.

५–गोर्ण (र्न C.) व पर्व विर यथा B. C.

६–'नो' इति नास्ति C.

७–वि (पि C.) कृते B. C.

८–सन्दिग्धमिदं पदम् ।

९–इष्यस्तन्नर्णा (र्ना B.) सि B. C.

१०–[-धा० ४।२१ ]

११–गमयाद् (यादन्तु C.) दकानि B. C.

१२–अत्र 'विकरणः' इति युक्तं स्यात् ।

१३–परि C.

१४–वरणाय B.

१५–न ह्यविकृते C.

१६–'भुवं प्रति गन्तुं समर्था' इति स्पष्टं स्यात् ।

१७–'भृ' 'रि' इति त्रुटितम् C.

१८–'भ्र' इति त्रुटितम् 'मण इत्य' C.

१९–[ ऋ० १।३१।१६ ] 'इमामग्ने' इत्येव प्रतीकम् B. C.

२०–'भयाद्' इति त्रुटितम् B.

२१–दुरं B. C.

प्रणश्य गतेषु रक्षस्सु प्रत्यागतः कृतापराधाभिप्रायेण अग्निमाह । इमां[1] हे अग्ने शारिं[2] 'शॄ[3] हिंसायाम्' मीमृषः[4] 'मृषतितिक्षायाम्[5]' इत्यस्य स्वार्थिको णिच्, लोडर्थे[6] लुङ्, मृष्यस्व[7] क्षमस्व नोऽस्माकम् । कतमः[8] ? उच्यते[9] । इममध्वानं त्वा यमगाम[10] विहृत्य[11] अनिष्ट्वा रक्षोभयाद् गतस्य दूराद्दूरम् । किं कारणमेवमुच्यते ? यस्माद् आपिः[12] प्राप्तो ज्ञातिः[13] स्वम् । कीदृशः ? पिता पितृस्थानीयः । प्रमतिः प्रकृष्टे मतिः प्रमतिरनुग्रहपरः । केषाम् ? सोम्यानां[14] सोमार्हाणां सोमसम्पादिनाम् । किञ्च भृमिर्[15]असि लोकत्रये विभ्रमितासि त्रिष्वपि लोकेष्वप्रतिहतगतिरित्यर्थः । ऋषिकृत् तमोपघात[16]द्वारेण च दर्शनकृद् मर्त्यानामेव । इति तृतीयमिति[17]हासपक्षेण योजना ।

नित्यदर्शने त्वन्यथा योज्यते । इमां हे अग्ने शारिं संसारप्राप्तिलक्षणां हिंसां मीमृषः मृजेरियं[18] जकारस्य षकारापत्त्या छान्दसं रूपं न मृषेः, मार्जयापनय । अस्माकमिमं संसाराध्वानं यमगाम प्राप्ताः स्मः । दूरान्मरणप्रबन्धरूपायाः सृष्टेः प्रभृति आसंसारमित्यर्थः । किं कारणम् ? यस्मात्त्वामापिः[19] पिता[20] प्रमतिः सोम्यानां यस्माच्च[21] भृमिरसि[22] भ्राम्यतेर्ण्यन्तस्येदं रूपम्, भ्रमयितासि भ्रान्तेः कर्ता । ऋषिकृद् दर्शनकृच्चासि सम्यग्ज्ञानकारणश्चासि[23] मनुष्याणाम् । एतदुक्तं भवति भ्रान्तेः सम्यग्ज्ञानस्य च त्वं कर्तासि । मर्त्यानां त्वदायत्तौ च संसार[24]मोक्षौ । त्वं च पितृवत् सर्वयजमानानामनुग्रहपरः । नोऽस्मान् सम्यग्ज्ञानोपादानेन मोचयास्मात् संसारादिति । तथाच स्मरणम्—

> सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते ।
> दर्शनेन विहीनस्तु संसारं प्रतिपद्यते[25]॥ इति ॥

विष्पितं[26] इत्यनवगतम् । विप्राप्त इत्यवगमः । विकारोपजनवर्णलोपादिर्द्रष्टव्यः[27] ।

१–इम B.　२–आर्णि B. रिणीं C.
३–[धा० ९।१६] धातुपाठे 'शॄ' इति दीर्घपाठः ।
४–वि ( मि C. ) मृषं B. C.
५–[धा० ४।५८ ] 'मृष तितिक्षायाम्' इति धातुपाठे पाठः । मृषस्वि (स्ती C.) ति B. C.
६–लोऽर्थे C.　७–मृष्यास्व C.
८–अत्र 'कतमम्' इति युक्तं स्यात् ।
९–उच्यके C.　१०–यमयगाम C.
११–व (वि C.) भूत्यां विभूत्यानिष्ट्वा B. C.
१२–आविः B. C.　१३–मापो ज्ञातिस्त्वं C.
१४–सौम्यानां B. C.
१५–भ्रमसि B. C.　१६–तं मापघात B.
१७–तृतीयमिति B. C.
१८–मृदेदं B. C.
१९–त्वामपि B.　२०–प्रता B. C.
२१–यस्माप B. यस्मा च C.
२२–भ्र ( भृ C. ) मिरसि B. C.
२३–'ण' इति त्रुटितम् C.　'०कारणश्चासि' इति युक्तं स्यात् ।
२४–'सं' इति त्रुटितम् C.
२५–[ मनु० ६।७४ ] दर्शनेन विहीनं तु B. C.
२६–विष्पत C.　२७–लोपादि द्रष्टव्यम् C.

विस्तीर्णे इत्यर्थः । उदाहरणम्—

इमे दिवो अनिमिषा पृथिव्याश्चिकित्वांसो अचेतसं नयन्ति ।
प्राजे चिन्नद्यो गाधमस्ति पारं नो अस्य विष्पितस्य पर्षन् ॥

वसिष्ठस्य । इमे प्रकृता मित्रो वरुणो अर्यमा च अनिमिषा अनिमिषेण महता यत्ने-नेत्यर्थः । दिवो द्युलोकात् पृथिव्याः पृथिवीलोकाच्च चिकित्वांस इदमप्यस्य कर्म अत्रानेन गन्तव्यमित्येतज्जानन्तः । अचेतसम् अहं कं देशं केन वा यास्यामीत्येतदजानन्तमित्यर्थः । प्राणिनं नयन्ति यत्रानेन परिपक्वस्वकर्मवशाद् गन्तव्यम् । यत एनान् मित्रादीन् ब्रवीमि प्राजे चित् प्रकर्षेण मज्यते यस्मिन् स प्रौजो मरणकालस्तस्मिन् । चिच्छब्दो यद्यर्थे, यदि नद्योऽस्याः संसारनद्या गाधं प्रतिष्ठास्थानं येनास्मिन् संसारनदीश्वभ्रे निमज्जन्तो धारयामहे तज्ज्ञानं कर्म वा किञ्चिदस्ति तत. पारं कूले नोऽस्मान् विष्पितस्य विप्राप्तस्य विस्तीर्णस्य संसारनदीश्वभ्रस्य पर्षन् पारयन्तु गमयन्तु प्रापयन्त्वित्यर्थः । अनादिश्च संसारः श्लिष्यते अन्तवांश्चापवर्गेण । अतः पारमपवर्ग इहाभिप्रेतः ।

तुरीपमित्यनवगतम् । तूर्णापीत्यवगमः । उदकमभिधेयम् । तद्धि तूर्णमाप्नोत्येवंशीलं तूर्णापि सत्तुरीपम् । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
विंशः खण्डः । ]

---

१–[ऋ० ७।६०।७]'इमे दिवः'इत्येव प्रतीकम् B.C.
२–वसिष्ठस्ये B.
३–प्रकृतो B. C. * 'वरुणोऽर्यमा' इति युक्तम् ।
४–गतद्व्यमित्ये B. गतव्यमित्ये C.
५–प्रद्रुजो B. C.
६–परं कुलेन (म C.) मास्मान् (त C.) B. C.
–विष्पतस्य B, C.
८–श्लिष्यन्ते B. C.
९–'अन्त' इति त्रुटितम् B.
१०–पर C. अन्तःपुरम B.
११–तूर्णावित्यर B. C.
१२–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ एकविंशः खण्डः । ][1]

तन्नस्तुरीपमद्भुतं पुरु वारं पुरु त्मना ।
त्वष्टा पोषाय वि ष्यतु राये नाभा नो अस्मयुः[2]॥

दीर्घतमसः[3]। तत् नोऽस्मदर्थं[4] तुरीपं[5] तूर्णापि तूर्णव्यापि अद्भुतं महन्नामेदम्, सारतश्च महद्‌ महत्त्वं तदिहाभिप्रेतं माभूत् पौनरुक्त्यं परेणेति तेन सारतो महदित्यर्थः। पुरु बाशब्दश्चार्थे बहु च बृष्ट्युदकं परिमाणतः। अरं पर्याप्तश्च सर्वकामेभ्यः पुरु विश्वमेतत्, क्रियाविशेषणम्। कथम्? विश्वं पुरु सुष्ठु भृशमित्यर्थः। त्मना आत्मनैव[6] त्वष्टा मध्यमस्थानः पोषाय पुष्ट्यर्थं विष्यतु[7] स्यतिरुपसृष्टो विमोचने विमुञ्चति। राये षष्ठ्यर्थे एषा चतुर्थी। कस्य पुष्ट्यर्थम्? रायो धनस्य गवादेः क्वचित् मुञ्चतु नाभा नाभौ जगतो* अभिभूतायां वेद्यां वा[8] नोऽस्माकं स्वभूतायाम् अस्मयुः त्वष्टृविशेषणमेतत्, अस्मान् कामयमानस्त्वष्टा। महत् सम्भूतमिति अद्भुतशब्दविवेचनं द्रष्टव्यमिति[9]।

रास्पिन इत्यनवगतम्। कथम्? रपतेः रसतेर्वा कर्तरि चेति कर्मसाधनो घञ् भावे वा रासो वा[10] रापो वा[11] शब्द उच्यते तद्वद्‌ रापि वा रासि वा सत् सकारपकारोपजननेन[12] रास्पिन्[13] शब्दः। बहुदकं स्तोतॄ[14] वोच्यते। ततस्तादर्थ्याद्[15] स्तोतरि अर्शआदित्वादकारः प्रकृतिभावश्च द्रष्टव्यः, रास्पिनो[16] दण्डिमती[18] शालेति यथा। अतश्च शब्दश्च तोदकेन तद्वा। मेघोऽभिधेयः। उच्चार्यमाणेन स्तोत्रेण स्तोता वा। उदाहरणम्—

उत त्या मे यशसा श्वेतनायै व्यन्ता पान्तौशिजो हुवध्यै ।
प्र वो नपातमपां कृणुध्वं प्र मातरा रास्पिनस्यायोः[20]॥

---

१—आदर्शपुस्तकेऽत्र खण्डारम्भनिर्देशो न दृश्यते।
२—[ ऋ० १।१४२।१० ] 'तन्नस्तुरीपं' इत्येव प्रतीकम् B. C.
३—घि ( दी C. ) र्घ तमसः B. C.
४—'अस्मद' इति त्रुटितम् B.
५—तुरीवं C. ६—आत्मना C.
७—विष्टपवतु B. * 'तो ताभिभू०' इति युक्तम्।
८—यां वा वेद्यां वा B. यां वेद्यां वा C.
९—'इति' इति B. 'ति' इति च C. पुस्तके त्रुटितम्।
१०—'रासो वा' इति नास्ति B.
११—'रापो वा' इति नास्ति C. रावो वा B.
१२—कारवकारो B. C.
१३—राष्पिन् C. १४—स्तोतुं B.
१५—'द' इति त्रुटितम् C.
१६—[ पा० ५।२।१२७ ]
१७ राप्सनः B. राष्पिनः C.
१८—दण्डिमनी C.
१९—अस्य वाक्यस्य पाठः सन्दिग्धः।
२०—[ऋ० १।१२२।४] 'उत (द C.) त्या मे' इत्येव प्रतीकम् B. C.

कक्षीवत आर्षम् । उतशब्दोऽप्यर्थे । त्यच्छब्दः समानार्थः । त्यच्छब्दश्रुतेर्योग्योथ-सम्बन्धो यच्छब्दोऽध्याहार्यः । यौ पूर्वमहं स्तुतवान् वैश्वदेवत्वात् सूक्तस्य त्यौ ताव-प्यश्विनौ मे तादर्थ्यचतुर्थ्येषा, ममार्थाय मदनुग्रहायेत्यर्थः । यशसा यशःशब्दोऽत्र धन-नामा अन्ननामा वा कीर्तेश्च पर्यायो वा अन्तर्नीतमत्वर्थश्च द्रष्टव्यः । तेन धनवन्तौ वा कीर्तिमन्तौ वा । श्वेतनौ श्वेतनेत्येतदपठितमपि उषोनाम द्रष्टव्यम् । षष्ठ्यर्थे चात्र चतुर्थी, तैच्छ्रुतेश्च उदयकाल इति शेषः । उषस उदयकाले व्यन्ता व्यन्तौ खादन्तौ पुरोडाशादीनि पान्ता पिबन्तौ सोमम् । औशिजे इत्यहं कक्षीवान् हुवे ह्वयतेरर्चतिकर्मणः । एतद्रूपं कर्म्यप्रत्यये । ओषधिवनस्पतयः प्रसारणे च स्तोतुमिच्छामीति शेषः । प्रशब्दः कृणुध्वमित्येतेन सम्बध्यते । व इत्यपि प्रथमायाः स्थाने वसादेशश्छान्दसत्वात् । यूय-मपि हे पुत्रादय ऋत्विजो वा नपातमपां प्लुवाननपात् सवितां । कथम् ? 'अद्भ्यो हि वैद्यु-तात्मना अग्निर्जायते अग्नेः सविता अग्नेर्वा आदित्योऽजायत' इति श्रुतेः । अथवा पश्चैवौ अग्निद् अङ्कच ओषधिवनस्पतयोऽग्निं नपातम् । प्रकृणुध्वं करोतिरत्र क्रियासामान्यवचन-त्वात् स्तुतौ वर्तते प्रकर्षेण स्तुत । प्रैमावरा प्रकर्षेण मातृभूते द्यावापृथिव्यौ स्तुत । कस्य मातृभूते ? उच्यते । रारिपनस्य स्तुतीनां रावित् रासितुर्वा । आयोर्मनुष्यनामेदं मनुष्य-स्तोतुरित्यर्थः । मेघस्य वा स्वेनानुग्रहेण निर्मात्रोरनयोर्गमनस्वभावकस्य ।

ऋञ्जतिरित्यनवगतं धात्वर्थमिति यत आह ऋञ्जतिः प्रसाधनकर्मा । विर्षमस्य समी-करणं वा वर्गवां करणादेवमुच्यते । प्रसाधनमात्मसात्करणं तदर्थ इत्यर्थः । अस्य च

१–'त्यच्छब्दस्तच्छब्दसमानार्थः' इति युक्तं स्यात् ।
२–कीर्तिश्च B. C.
३–धनवन्तो B.
४–कीर्तिमन्तो B.
५–श्व (श्व C.) तनौ श्व (श्व C.) तने B. C.
६–त्येतदप्यपठि B. त्येदपठि C.
७–कृतच्यूतेश्च B. न्तु तच्यूतेश्च C.
८–डाशादिनि B.
९–वान्ता C.
१०–वन्तौ पिब च सोमं C.
११–औशिज C.
१२–कर्शीवान् B. C.
१३–'व' इति द्विर्लिखितम् B. C.
१४–कथ्यै B.
१५ अयं पाठः सन्दिग्धः ।
१६–'न सम्बध्यते' इति द्विर्लिखितम् C.
१७–हे म पुत्रा C. अत्र कदाचित् 'हे मम पुत्रा-दयः' इति वा पाठो भवेत् ।
१८–सपिता B.
१९–अद्वयो हि B.
२०–[ अनुपलब्धमूलमिदं वचनम् ]
२१–अत्रायं पाठः सन्दिग्धः ।
२२–मा कृणुध्वं B. C.
२३–'त्व' इति त्रुटितम् B.
२४–'त' इति C. पुस्तके त्रुटितम् ।
२५–'प्र' इति नास्ति B.
२६–विषयस्य B.
२७–'वर्गीकरणात्' इति वा पाठोऽत्र भवेत् ।

भाऋजीक इत्येतेन गतार्थतां मन्यमानो भाष्यकारो निगमं नाध्यगीष्ट[1]। तथोदाहरणं प्रदर्श्यते—

दूतं वो विश्ववेदसं हव्यवाहममर्त्यम् ।
यजिष्ठमृञ्जसे गिरा[2]॥

वामदेवस्यार्षम्। अग्निरुच्यते। दूतं वः द्वितीयैकवचनस्यायं वसादेशश्छान्दसत्वात्, त्वाम्। कीदृशम्? विश्ववेदसं[3] सर्वस्य वेदितारं सर्वज्ञमित्यर्थः। सर्वधनेनया[4] हव्यवाहं हविषां वोढारम्। अमर्त्यं मरणवर्जितम्। यजिष्ठम् अतिशयेन यष्टारम्। ऋञ्जसे, व्यत्ययेन[5] मध्यम उत्तमस्य स्थाने ऋञ्जे गिरा स्तुत्या। प्रदर्शनमिदं हविषो दानेन स्तुत्या च प्रसाधयामि[6]।

ऋजुरित्यप्यस्यैव ऋञ्जतेः प्रसिद्धः, अकुटिल इत्यर्थः। उदाहरणम्—

ऋजुनीती नो वरुणो मित्रो नयतु विद्वान्।
अर्यमा देवैः सजोषाः[7]॥

गौतमस्य। अस्मान् मित्रो वरुणश्च यत्र स्वर्गे ब्रह्मलोके चास्माभिः कृते कर्मणि गन्तव्यं तत्र नयतु विद्वान्। किम्? सामर्थ्यात् कर्मफलविपाकं भक्तता चास्माकम्। न च केवलौ मित्रावरुणौ। किं तर्हि? अर्यमा[8] च देवैः सह सम्प्रीयमाणः।

प्रतद्वसू इत्यनवगतम्। प्राप्तवसू[9] इत्यवगमः। पकारलोपोपजनह्रस्वत्वादीनि द्रष्टव्यानि। अश्वावभिधेयौ। उदाहरणम्—

इह त्या सधमाद्या युजानः सोमपीतये।
हरी इन्द्र प्रतद्वसू अभि स्वर[10][11]॥

नारदस्यार्षम्। इह अस्मद्यज्ञे[12] त्या तौ सधमाद्यौ[13] सह मादयितव्यौ युजाना* रथे आत्मीये। किमर्थम्? सोमपीतये आत्मनः सोमपानार्थम्। हरी यावात्मीयावश्वौ हे इन्द्र प्रतद्वसू प्राप्तऋजीषाख्यधनौ। अभिस्वर स्वरतिर्गतिकर्मा[14] अभिगच्छ।

हिनोत[15] इत्यनवगतम्। प्रहिणुत[16] इत्यवगमः। उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
एकविंशः खण्डः ।[17] ]

---

१–निगमयन्नध्यष्ट B.
२–[ ऋ० ४।८।१ ] 'दूतं वः' इत्येव प्रतीकम् B. C.
३–विश्वदेवसं C. ४–सन्दिग्धमिदं पदम्।
५–व्यव्ययेन C. ६–प्रसाधयापि B.
७–[ ऋ० १।९०।१ ] 'ऋजुनीति ( ती ) नः' इत्येव प्रतीकम् B. C. ८–अर्यया B.
९–प्राते वसू C. १०–जनः इव B. C.
११–[ ऋ० ८।१३।२७ ] 'इह ( हे C. ) त्या' इत्येव प्रतीकम् B. C.
१२–अस्मभ्यं B. १३–सधमान्या B. C
* 'युजानौ' इति युक्तम्।
१४–स्वरतिग्यतिकर्मा C.
१५–भिनोत C. १६–प्रहिअत C.
१७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ द्वाविंशः खण्डः । ][1]

हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम् ।
ऋतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः[2]॥

कवषस्य । आप[3] एकधनलक्षणा उच्यन्ते । 'हि गतौ'[4] सामर्थ्याद्यात्रान्तर्नीतण्यर्थः । हिनोत गमयत[5] समापयत वा । नोऽस्माकम्[6] । अध्वरं[7] यज्ञम् । किमर्थम् ? देवज्या चतुर्थ्या लुग् द्रष्टव्यः[8], देवयज्यायै देवयागार्थम् । हिनोते[9] च गमयत ब्रह्म स्तुत्याख्यं वर्धयत स्तुतिं प्रति निमित्तभावादेवमुच्यते । किमर्थम् ? सनये सनिलाय[10] यज्ञफललक्षणानां धनानाम् । किञ्च यदिदमृतस्य यज्ञस्य योगे सम्बन्धिनि सप्तमीश्रुतेर्वर्तेत इति शेषः । यज्ञसम्बन्धिताभापन्न इत्यर्थः । किं पुनस्तत् ?[11]·········भ्यां युज्यमानत्वात् योगशब्देन शकटमुच्यते । योग इति सामीपिकमधिकरणम् । गङ्गायां गाव इति यथा । यज्ञसम्बन्धिनो[12] हविर्धानस्य शकटस्य समीपे ऊधःस्थानीयमधिषवणचर्म एतत् प्रति सोमरसेन मिश्रीभूय विष्यध्वं विमुञ्चतात्मानं पूरयत तद्रसेनेत्यर्थः । तच्च कुर्वत्यः श्रुष्टीवरीः[13] सुखवतीर्द्वितीया प्रथमार्थे, सुखवत्यः सुखकर्य इत्यर्थः । भूतन भवत अस्मभ्यं हे आप एकधनाः ।

योगशब्दार्थकथनप्रसङ्गेन शकटं निराह शकृता युक्तं तद्विशिष्टेन शकृता गोमये-[14] नोदति मार्गे शकृन्मुञ्चतीत्यर्थः[15] । शनैर्वा तकति गच्छति गन्तृवशात्तु शब्देन चेत्यर्थभूतेन[16] तकति ।

चोष्कूयमाणः[17], चोष्कूयत इति पदद्वयमनवगतधात्वर्थम् । कुत एतत् यतः 'स्कुञ् आप्रवणे'[18] पठ्यते । इह च दानार्थः । अत्रोपदेशत्वाच्च[19] पत्वानवगमः । क्वचिद् उदसनार्थ-[20] त्वादनेकार्थत्वमपि । उदाहरणम्—

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो न दृश्यते ।
२–[ ऋ० १०।३०।११ ] 'हिनोता नः' इत्येव प्रतीकम् B. C.
३–आप एतधन C.
४–[ धा० ५।११ ]
५–हमयत B. C.
६–नस्यावम् B.
७–अध्वर्क B, अध्वत् C.
८–द्रष्टव्यम् B
९–हि नो तु च B. C.
१०–सनिलाय C. सन्दिग्धमिदं पदम् ।
११–त्वाभ्यागमश B. त्वाभ्योग C.
१२–न्धिना हवि B. C.
१३–श्रुष्टिनरीः ( नीः C. ) B. C.
१४–मये ताडयति C.
१५–मार्गेण श (C.) कृन्त (न्ते C.) नागती B. C.
१६–भूतन्तन्तुकति B. C.
१७–माणञ्चोष्कू C.
१८–[ धा० ९।६ ] स्कुड् C.
१९–एषोपदेश B.
२०–शु (सु C.) दसना B. C.

नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि ।
चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ॥

हिरण्यस्तूपस्य । निशब्द असक्त इत्येतेन सम्बध्यते । सर्वसेनः समग्रया सेनयोपेन इन्द्रः । इषुधीन् तूणानि असक्त 'षञ्ज सङ्गे' सजति आत्मनः पृष्ठे रथे वा बध्नातीत्यर्थः । नियन्ताय ईश्वर इन्द्रः शत्रूणां स्वभूता गाः समजति 'अज गतिक्षेपणयोः' सम्यक् क्षिपति स्वराष्ट्रं प्रति प्रेरयति अपहरतीत्यर्थः । यस्य शत्रोर्गा अपहर्तुं वष्टि कामयते तस्य सर्वस्यापहरति न केनचित् प्रतियोद्धुं शक्यत इत्यर्थः । अथवा दानकाले यदर्पणं तदत्र क्षेपणमभिप्रेतम् । आश्रितेभ्यो दानकाले सम्यक् क्षेपयति अर्पयति यस्यार्पयितुं कामयते यस्मै दातुमिच्छति तस्मै ददातीत्यर्थः । अथवा गावोऽत्र आपोऽभिप्रेताः । निषज्येषुधीन् मेघं घ्नन् अपः सम्यक् क्षिपति । यस्य वष्टि यजमानस्य वा ।

परोक्षकृतः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् । चोष्कूयमाणः स्कुनातेर्दानार्थस्य यङि रूपम् । अत्यर्थं पुनः पुनर्ददत् हे इन्द्र भूरि बहु वामं वननीयमत्यन्तोत्कृष्टम् । किम् ? सामर्थ्याद्धनं मा पणिर्भूः पणिर्वणिगुच्यते, मा वणिक्सदृशोऽल्पदो भूरित्यर्थः । अस्मदधि अस्माकमुपरि अस्मभ्यं मा अल्पं कदाचिद्दा इत्यर्थः । हे प्रवृद्ध शरीरेण महन् ।

स्कुनातेर्दानार्थतां दर्शयन्नाह ददातीति । अनेकार्थत्वप्रदर्शनायाह एधमानद्विळित्यादि ।

शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ।
एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥

गौरिवीतेरार्षम् । शृणोतेर्व्यत्ययेनात्र आत्मनेपदोत्तमैकवचनं शप् विकरणः कर्मणि लट् प्रथमैकवचनस्य स्थाने । श्रूयते प्रख्यायत इत्यर्थः । वीरः शूरः श्लाघे । किं कुर्वन् ?

१—[ ऋ० १।३३।३ ] 'नि सर्वसेवः ( ने C. )' इत्येव प्रतीकम्
२—आसक्त B. 'निशब्दोऽसक्त' इत्युचितम्
३—रूपाणि C.
४—[ धा० १।१०२२ ]
५—सजति C.
६—आत्मानं B.
७—[ धा० १।२३० ]
८—प्रतियोद्धुं C.
९—तस्मै C.
१०—त्र आभिप्रेताः B. गावोऽत्रापोऽभिप्रेताः C.
११—तत्र: B. C.
१२—वज्रे B. C.
१३—कृतवान (न C) भिन्नं B. C.
१४—नाम B. C. *'स्कुनाते०' इति युक्तं स्यात् ।
१५—मा पणिभूः B. C.
१६—माल्पं B. माल्पं C.
१७—चिद्दा B.
१८—ददिन्द्रेति B. ददिन्द्रे इति C.
१९—विलिकादि B. विलितादि C. 'मानद्विळि०' इति युक्तम् ।
२०—[ ऋ० ६।४७।१६ ] 'शृण्वे (विरः C.)' इत्येव प्रतीकम् B. C.
२१—'गौ' इति मुद्रितम् C.
२२—शप्य C.
२३—प्रत्ययेक B.
२४—'वीरः शूरः' इति मुद्रितम् B. श्लघते इत्यादिः पाठः ।

उच्यते । अमसुं दमायन यावान् कश्चिदुग्रोऽप्रसह्यः शत्रुस्तं सर्वं देमायन्[1] । अन्यमन्यं चात्मनः[2] स्तोतारम्[3] । अतिनेनीयमानोऽतिशब्दः पूजायाम, अतिपूजितं शोभनमर्थं नयन्[4] । किम् ? सामर्थ्यात् समृद्धिम्[5] । सर्वं च स्तोतारमात्मनः समृद्धं कुर्वन्नित्यर्थः । किञ्च एधमानद्विड् ऋध्यतां[+] द्वेष्टा । किं सर्वेषाम् ? न[6] । किं तर्हि ? अयज्वनाम्[*] । कुत एतत् ? सामर्थ्याद्विभवस्य दिव्यस्य पार्थिवस्य च धनस्य राजा ईश्वरः । चोष्कूयते स्कुनातिरत्र व्युदसनार्थे । अत्यन्तं व्युदस्यति निराकरोति । कीदृशान् ? विश. 'विश प्रवेशने'[7] अनुप्रविष्टानात्मीयभूतानाश्रितानपि[8] इत्यर्थः । इत्थं मनुष्यान् । किं सर्वान् ? न । किं तर्हि ? ऋद्धानयज्वनः । कुत एतत् ? एधमानद्विडिति वचनात् द्विष्यमाणस्य च व्युदस्यमानत्वात्[9] ।

एधमानद्वेति अहशब्दो व्युदस्यतीत्यस्यानन्तरो द्रष्टव्यः । व्युदस्यत्येव । अतिनेनीयमान इत्यस्यार्थवचनम् असुन्वतोऽभ्यादधातीति[10] । उच्छिन्नान् करोतीत्यर्थः । उभयोर्नामाख्यातयोर्निर्वचनं चोष्कूयमाण[11] इत्यादि ।

सुमदित्यनवगतम् । स्वयमित्यवगमः । उदाहरणम्—

उप प्रागात् सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः ।
अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम्[12] ॥

प्रकर्षेणोपागात् । लोडर्थे लुङ्, उपागच्छतु । सुमत् स्वयमेव । अनेकवाक्यतायै[13] यत्तच्छब्दौ योग्यतार्थसम्बन्धावध्याहार्यौ । यन्मे मम मदीयमिति शेषः । अधायि[14] शब्दोऽयमं दधातिर्नि पूर्वार्थो द्रष्टव्यः । न्यधायि निहितम् । यन्मम मदीयम्[15] । किं पुनस्तत् ? उच्यते । यज्ञेनेदं यत्स्यादिति[16] । सामर्थ्यात् यज्ञसाध्यं विशिष्टं फलम् । तदर्थं देवानां गर्भभूतानां[17] या आशा प्रार्थना हविर्भूतमिममश्वं भक्षयेत्येवंरूपा[18] । उपेत्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः, उपागच्छतु । कैः ? वीतपृष्ठः वीतेः कान्तिकर्मणः वीतं कान्तं पृष्ठं यस्य

१-सर्वैदमाय B. C. 'दमयन्' इति युक्तं स्यात्
२-मन्यश्चात्मन B. C. ३-'ता' इति त्रुटितम् C.
४-इति नेनीय B. C. ५-समृद्धि C.
+ 'ऋध्यतां' इति युक्तम् ।
६-'न' इति नास्ति B. C.
* 'अयज्वनाम्' इति युक्तं स्यात् ।
७-[ धा० ६।१४३ ]
८-'अपित' इति सन्दिग्धं पदम् ।
९-मानाद्विर्लिन वच B. C.
१०-'असुन्वतः सुन्वतोऽभ्यादधाति' इत्येवं मूल निरुक्ते पाठः ।
११-चुष्कूयमाण B.
१२-[ ऋ० १।१६२।७ ] 'उप प्रागात्' इत्येव प्रतीकम् B. C. १३-वोधर्थे C.
१४-अधानि C. १५-मदीयः C.
१६-यत्स्या B. यस्या C.
१७-यागां गर्भभूता C.
१८-'स' इति त्रुटितम् B. C.
१९-स्याम B. C.
२०-के पीतपृष्ठ पीतेः कान्तिकर्मणः पीतं कान्तं B. C.

सः। अश्वमेधसंभूतोऽयमश्व इत्यर्थः। उपागच्छन्तं च अनुशब्दो मदन्तीत्येतेन सम्बध्यते। एनमश्वमनुमदन्ति। मदिरत्र सामर्थ्यान्मतेरर्थे। लोडर्थे च लट्, अनुमन्यन्ताम्। के? विप्रा मेधाविन ऋत्विजः। देवानां पुष्टे पोषणं पुष्टं भावे निष्ठा निमित्तार्थे च सप्तमी, पोषणनिमित्ते पुष्ट्यर्थमित्यर्थः। चकृत कृतवन्तः। सुबन्धुं सुबन्धनं यूपे रशनया सम्यग् बद्धमित्यर्थः।

आश्वमेधिक इति प्रकरणमनुसारयति। प्रकरणमप्यर्थाभिव्यक्तावलमित्यभिप्रायः। तथाच शास्त्रान्तरे वक्ष्यति 'प्रकरणश एव मन्त्रा निर्वक्तव्याः' इति।

दिविष्टिषु इत्यनवगतम्। दिव एषणीषु इत्यवगमः। 'इषु इच्छायाम्' इत्यस्य धातोः करणसाधनः क्तिन्। द्यौर्गम्यते प्रार्थ्यते वा याभिस्ता यागक्रिया इष्टयस्ताः सत्यो दिविष्टयः। उदाहरणम्—

स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु।
राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि॥

देवातिथेरार्षम्। स्थूरं स्थूलं परिमाणतः विपुलं सदित्यर्थः। किं तत्? राधो धनम्। शताश्वं शतेनाश्वानां युक्तम्। कुरुङ्गस्य कुरुङ्गनाम्नो राज्ञः। त्वेषस्य 'त्विष दीप्तौ' अस्य पचाद्यचि त्वेषस्य। सुभगस्य सुधनस्य स्वभूतासु दिविष्टिषु स्वर्गसाधनभूतासु यागक्रियासु या रातयस्तासु। यागाङ्गभूतेषु दक्षिणालक्षणेषु दानेष्वित्यर्थः। तुर्वशेषु तुर्वश इति मनुष्यनाम ततः सप्तमी निर्धारणे, मनुष्याणां मध्ये वयम् अमन्महि मन्महीति याच्ञायामत्र। सामर्थ्यात्तत्पूर्वको लाभो लक्ष्यते। अलभामहि लब्धवन्तो वयम्।

स्थूलं निगमप्रसक्तं निराह एकत्र सहिता आभिमुख्येन स्थिता मात्रा अवयवा यस्य स महानित्यर्थवचनम्। स्थूलप्रतियोगिप्रसङ्गेन अणुपरिमाणं निराह अणुः अनु स्थवीयांसमिति

---

१–साभूतोऽय B. २–गच्छतं च B. C.
३–एवमश्व B. *'मने॰' इति युक्तम्
४–अनुमन्यन्ताः B.
५–पोषणे निमित्ते B. C.
६–'सुबन्धुं' इति नास्ति B. C.
७–रूपे B.
८–त्ययमि B. रणमभ्यार्थाभिव्यक्तावलमि C.
९–[ अनुपलब्धमूलमिदम् ]
१०–[ धा॰ ६।७० ]
११–धौगम्य B. यौगम्य C.
१२–'च' इति नास्ति C.
१३–[ ऋ॰ ८।४।१९ ] 'स्थूरं राधः' इत्येव प्रतीकम् B. C.
१४–तिथेराषु C.
१५–'श्वा' इति द्विर्लिखितम् C.
१६–'कुरुङ्गस्य' इति नास्ति B. C.
१७–[ धा॰ १।१०२६ ]
१८–[ पा॰ ३।१।१३४ ]
१९–'अह' इति त्रुटितम् C.
२०–'अ' इति त्रुटितम् B.
२१–याच्ञायामत्र C. २२–आत्मपरिमाणं B. C.
२३–'अनु' इति नास्ति B. C.

अणुः स्थवीयसोऽनु[1] पश्चात् ततोऽल्पपरिमाण इत्यर्थः । अनुपूर्वस्यार्थैः[2] क्विनि स्थवीयांसमन्वञ्चतीति अन्वग्भिति[3] प्राप्ते उपसर्ग एवायं[4] कृतेणत्वलुप्तनामकरणः[5] । लुप्तः क्वचित् प्रत्यय उत्तरपद इत्यर्थः । अस्य दृष्टान्तो यथा साम्प्रति भवं साम्प्रतं काल एवोच्यते । लुप्तेऽपि मध्यमे प्रतीतिर्वर्तमान एवोच्यते । भेदाभेदविवक्षाकृतो विशेषः । यथा वानस्पत्यं चर्तय[6] इति । कुरुं निराह[7] कुरूनसौ[8] पुत्रत्वे गतवान् । राजत्वेन कुलगमनाद्वा कुलीन इत्यर्थः । कुलव्यवस्थागमनाद्वा । शत्रुकुलानि वा जेतुम् । प्रसङ्गादाह कुरुः कृन्ततेः शत्रून्नसौ[9] छिनत्ति वा पापाचारानसाधून्वा । क्रूरमित्यप्यस्यैव[10] कृन्ततेः चर्म वा व्याघ्रादि वा तदप्युच्छिनत्ति उच्छेद्यं वा । अनुप्रसक्तं कुलं कुष्णातेर्[11] वृद्ध्यर्थस्य विकुपितं[12] हि तद् महदित्यर्थः । वह्यो हि सनाभयः कुलमुच्यते ।

दूत इत्यनवगतम् । तत्पुनः 'वाहिष्ठो वां हवानाम्[13]' इत्यत्र 'दूतो जवतेर्वा[14]' इत्येवं व्याख्यातम् ।

जिन्वतीत्यनवगतम् । अत्र किल धात्वर्थोऽनवगतः । प्रीणनलक्षणे हि इचिदिविधि[15] इत्यत्र जिन्वतेरपोऽभिप्रायः[16] । उदाहरणम्—

समानमेतदुदकमुच्चैत्यव चाहभिः ।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः[17] ॥

इति प्रसङ्गादुत्तरत्र[18] व्याख्यास्यते ।

इति निरुक्तविवरणसमुच्चये
एकादशस्या-[ षष्ठस्या-] ध्यायस्य
चतुर्थः पादः ।
[ द्वाविंशश्च खण्डः
समाप्तः । ][19]

१—षस न पश्चात् B. C.
२—स्यां च ( स्याश्चः C. ) क्वनि B. C.
३—अन्वचि प्राप्ते B. C.
४—पावायं C.
५—कृतौ त्वलुप्तनाम B.
६—'चतय' इति सन्दिग्धं पदम् ।
७—'ह' इति त्रुटितम् B. C.
८—कुरुं B. C.
९—शतनसौ C.
१०—करमित्यस्यैव B. C.
११—कृष्णाते B. C.
१२—विकूपितं B. C.
१३—[ ऋ० ८।२६।१६ ]
१४—[ निरु० ५।१ ] जपतेर्वा C. जवपनेर्वा B.
१५—अयं पाठः सन्दिग्धः ।
१६—रपोऽभि C.
१७—[ ऋ० १।१६४।५१ ] 'समानमेतदुदकम्' इत्येव प्रतीकम् B. C.
१८—[ निरु० ७।२३ ] गामुत्तर C.
१९—अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।

## [ अथ पञ्चमः पादः । ]

अमत्र इत्यनवगतम्। अमात्र इत्यवगमः। मात्रा परिमाणम्। अपरिमाणो महानित्यर्थप्राप्तवचनम्। अभ्यमितो वा मिनातेर्मिनोतेर्वा वधकर्मणः। अभ्यमितः सन् अमत्रः।
उदाहरणम्—

महाँ अमत्रो वृजने विरप्शी प्र शवः पत्यते धृष्ण्वोजः।
नाह विव्याच पृथिवी चनैनं यत् सोमासो हर्यश्वममन्दन्॥

विश्वामित्रस्य। इन्द्र उच्यते। महान् शरीरेण। अमत्रोऽमात्रोऽपरिमाणश्च बलेन अहिंसितपूर्वो वा केनचित्। वृजने वृजनशब्दः क्रियानिमित्तको बलनिमित्तो वान्तर्नीतमत्वर्थः संग्रामे द्रष्टव्यः। वर्ज्यन्ते यत्र धार्णैर्योद्धारस्तस्मिन् व्रजनवति बलवति वा संग्रामे। विरप्शीर्विरपणशील आह्वानकृत् शत्रूणामभिभवितृ ओजो बलम्। किं बहु? नाह विव्याच अहशब्दो विनिग्रहार्थीयत्वादेवार्थे व्यचिर्व्याप्त्यर्थः, नैव व्याप्नोति पृथिवी चन चनेति निपातः स्वार्थे तच्छ्रुतेर्द्यौश्चेत्युपसंग्रहः,पृथिवी च द्यौश्च माहात्म्येन द्यावापृथिव्यावप्यनेनैव व्याप्नुत इत्यर्थः। यच्छब्दो यदेत्येतस्यार्थे व्यत्ययेन वा नपुंसकम्। यदा यं वा इन्द्रं सोमासः सोमा हर्यश्वं हरी अश्वौ यस्य तम् अमन्दन् मोदयन्ति तर्पयन्ति चेत्यर्थः।

ऋचीषम इत्यनवगतम्। अर्चनमृक् स्तुतिः तया तुल्यः। ऋचा सम इत्यवगमः। ऋचा सम इति वाक्येनार्थप्रदर्शनम्। याप्यतिशयाभिप्रायेण क्रियते साप्यस्याशाहावत् समैव भवति नातिरिच्यत इत्यर्थः। उदाहरणम्—

इह श्रुत इन्द्रो अस्मे अद्य स्तवे वज्र्यृचीषमः।
मित्रो न यो जनेष्वा यशश्चक्रे असाम्या॥

१–अयं सर्वः पादारम्भात्मकः पाठो नास्ति C.
२–अमात्र C.
३–रिमाणं B.
४–त्यर्थः प्रात B.
५–मिना मिनाते मीनोतेर्वा C.
६–[ऋ० ३।३६।४] 'म (मा C.) हाँ (हाड् C.) अमत्रः' इत्येव प्रतीकम् B. C.
७–हिंसतपूर्वो C.
८–त्र (प्र B.) जने प्रजन B. C.
९–वर्ज्यते B. C.
१०–पार्णैर्यो C.
११–प्रजनव (प C.) ति B. C.
१२–विरच्छद् C.
१३–'वि' इति त्रुटितम् B.
१४–चनेति B. C.
१५–तच्छ्रु (च्छ्रू C.) तेर्द्यौश्चे (B.) B. C.
१६–वप्यौनैव C.
१७–[ऋ० १०।२२।२] 'इह श्रुतः' इत्येव प्रतीकम् B. C.

विमदस्यार्षम् । इहास्मिन् यज्ञे श्रुतः प्रख्यात इन्द्रः । अस्मे अस्माभिः । अथ स्तवे व्यत्ययेनोत्तमैकवचनं कर्मणि प्रथमपुरुषस्यैकवचनस्य स्थाने, स्तूयते वज्री आवृतवज्रः । ऋचीषमः तुल्ययाभ्यधिकगुणाध्याहाररूपेण अधिकतास्तुतिरनुवादिनी भवति सा यस्येत्यर्थः । किञ्च मित्रो न मित्र इव यथा स्निग्धः कश्चित् कस्यचित् जनेषा आकारः स्वार्थे यश इत्येतस्माच्च परो द्रष्टव्यः । गुणाभिधानं कार्यात् तद्वत् सर्वजनेषु स्तोतृभ्यो यष्टृभ्यश्च यशश्चकारोऽत्र । असामि अनाशा अप्रसायि च तत्करोति अनवरतमित्यर्थः । सुसमाप्तं वा पर्याप्तमित्यर्थः ।

अनर्शरातिरित्यनवगतम् । अनश्लीलदानमित्यवगमः । अर्शसशब्दोऽश्लीलवाची । अश्लीलं किम् ? पापकम् । कस्मादिति चेत् ? यस्मात् पापवचनं प्रतिपत्तये रातिः पापिष्ठस्य दाता । तद्विपरीतोऽनर्शरातिः । उदाहरणम्—

अनर्शरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य रातयः ।
सो अस्य कामं विधतो न रोषति मनो दानाय चोदयन् ॥

नृमेधस्यार्षम् । अनर्शरातिम् अपापकदानम् उत्कृष्टस्य दातारमित्यर्थः । वसुदां विभजन्तमेतत् । अश्लीलमक्षरवर्णसामान्यान्निराह अश्रिमदिति । अश्रयः कोऽयस्ताभिस्तद्दश्रीमान् । तच्चात्र वैषम्योपलक्षणम् । तच्च विषमहेतुत्वाद् अश्रिमत् विषममित्याह । अश्रिमत् सदश्लीलम् अश्लीलं सदर्शराति रातिर्दानम् अश्लीलविषया रातिर्दानं यस्य सोऽर्शरातिः पापिष्ठस्य दाता तद्विपरीतोऽनर्शरातिः । वसुनो धनस्य दातारमिन्द्रं होतः उपस्तुहि अन्तरात्मन् वा । किं कारणम् ? यतः भद्रा इन्द्रस्य रातयः कल्याणानि स्तोतृभ्यो

---

१–विमन्दस्या C.   २–अस्मै B. C.
३–ध्याहारोपेण C.
४–स यस्येत्यर्थः B. समस्येत्यर्थः C.
५–'मित्रो न' इति नास्ति B C.
६–चकारोऽद्यः B. शस्करोऽत्र C.
७–असायि B.   ८–अनशील C.
९–न्दोऽश्लील वा C.
१०–अशीलं C.
११–पावकम् B. C.   १२–यतः C.
१३–ये रात्रिः B. येत् रात्रिः C.
१४–तद्द (C.) परीतोदर्श (श B.) रात्रिः B. C.
१५–[ ऋ० ८।९९।४ ] अर्शराति आत्मनं दशरात्रं B. आत्मानं दशरात्रिं C.
१६–आनर्शरात्रिं C.
१७ अपावक B. C.  * 'विजन्त॰' इत्युचितम् ।
१८–अशीमन् B. C.
१९–अश्रीमा (म C.) न् B. C.
२०–रात्रि दुरात्रिर्दानं C.
२१–श्लील विष B. अशीलविषयाहतिर्दानं C.
२२–सोऽर्शतिः (र्ति C.) B. C.
२३–नर्शरातिः C. 'अश्लीलमक्षरवर्णसामान्यान्निराह' इत्यारभ्यात्रपर्यन्तः पाठो मन्त्रव्याख्याया अनन्तरमेव पठितो युक्तः स्यात् ।
२४–उपस्तु (स्त C.) हिः B. C.

यष्टृभ्यश्च इन्द्रस्य स्वभूतानि दानानि महदैश्वर्यकारीणीत्यर्थः । यतश्च स इन्द्रः अस्य स्तोतुः काममिच्छामभिलषितार्थविषया प्रार्थनां विधतो[1] विदधतः परिचरतो न रोषति न कोपयति न हिनस्तीत्यर्थः[2] । मन आत्मीयं पुनर्दानाय[3] चोदयन्[4] सातत्येन ददित्यर्थः ।

अनर्वेत्यनवगतम् । अर्तेः 'अन्येभ्योऽपि दृश्यन्ते'[5] इत्येवं वनिपि रूपम्[6] । 'अर्वणस्त्रसावनञः'[7] इति वचनादत्र[8] भावाभावः सिद्धः छान्दसत्वादनवगतः[9] । प्रतिशास्वातन्त्र्यं चात्र[10] विवक्षितं नागमनप्रतिषेधमात्रं गन्तुः । तथा चाह अप्रत्यृतोऽप्रतिगतोऽन्यस्मिन्[11] अन्यमनाश्रितः[12] स्वतन्त्र इत्यर्थः । उदाहरणम्—

अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः ।
गाथान्यः सुरुचो यस्य देवा आशृण्वन्ति नवमानस्य मर्ताः[13] ॥

अगस्त्यस्यार्षम् । अनर्वाणमगतमन्यं प्रत्याश्रिततया अपराश्रयमित्यर्थः । वृषभं[14] वर्षितारम् । मन्द्रजिह्वं मन्द्रयतिरर्चतिकर्मा[15] जिह्वेति वाङ्नाम[16] । मन्द्रा जिह्वा वागस्य स मन्द्रजिह्वस्तं[17] स्तुत्यवाचमित्यर्थः । मोदनवाचं वा सर्वे हि बृहस्पतेः स्तनयित्नुलक्षणां वाचमुपश्रुत्य मोदयन्ते । अत एवंगुणं बृहस्पतिं वर्धय स्तुहि अन्तरात्मन् । कीदृशं बृहस्पतिम् ? नव्यं नवनीयं स्तुत्यम् अर्कैः स्तुतिरूपैः । यस्य बृहस्पतेः किम् ? उच्यते । गाथान्यः गाथा[18] गाथेति वाङ्नाम सा चार्थसामर्थ्यात् स्तनयित्नुलक्षणा तां दर्शयति[19] प्रेरयति गाथान्यस्तनत इत्यर्थः । सुरुचो विद्युद्रूपतया सुदीप्तः । यस्य देवा आशृण्वन्ति आभिमुख्येनाकर्णयन्ति । नवमानस्य तनतेः शब्दकर्मणश्छान्दसमेतद्रूपम् । स्तनयित्नुलक्षणं शब्दं कुर्वतः । न च केवलं मनुष्या देवा मनुष्याश्च[20] ।

अथवा गाथाः स्तुतयस्तासां नेता बृहस्पतिर्गाथानीः[21] । कुत एतत् ? पुरोहितत्वात् ।

---

१–'विधतः' इति नास्ति B. C.
२–हिनस्ति ध्यर्थः C.
३–पुनर्ददनाय C.
४–चोदयत् B. C.
५–[ पा० ३।२।७५ ] दृश्यते B. C.
६–इत्येव रूपं वनिरूप B. इत्येवं वनिरूप C.
७–[ पा० ६।४।१२७ ] प्रसावनं च B. C.
८–वचनात्र B. वचना C. '०दत्र तभा०' इत्युचितम् ।
९–वगतम् B. १०–चात्र B.
११–अत्र भूतः B. C.
१२–महाश्रितः B. C.
१३–[ ऋ० १।१९०।१ ] 'अनर्वाणं' इत्येव प्रतीकम् B. C.
१४–वि वृषभं C.
१५–रर्चयति क B.
१६–वाङ्नामा आत्मा B. वाङ्नात्मा C.
१७–'तं' इति नास्ति B. जिह्वतं C.
१८–अनेकं 'गाथा' इति पदं व्यर्थमेव ।
१९–'र्शं' इति त्रुटितम् C. 'दयति' इति पाठे सत्यत्र कदाचित् 'नयति' इत्येव मूलपाठः स्यात् ।
२०–'मनुष्या देवा' इति त्रुटितम् C.
२१–'गाथानीः' इति युक्तं स्यात् ।

## [ अथ त्रयस्त्रिंशः खण्डः ]

तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः ।
उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृधा ॥

कुत्सस्तुतेरार्षम् । इन्द्र उच्यते । तुविक्षं बहुविक्षेपं बहुशरविक्षेपसहं विस्तीर्णमण्डलमत्यायतमित्यर्थः । ते तव स्वभूतं सुकृतं वा सुसंस्कृतम् । सूमयं सूमय इति सुखनाम सुसुखं साधूनां वा सुखकरत्वात् सुष्ठु सुखमित्यर्थः । मण्डितो वा ऋदूपे बाहुविशेषणमेतत्, ऋतुशब्दोऽर्दतेर्हिंसार्थस्य शत्रूणामर्दनेन पातयितारौ । चित् पदपूरणः । ऋदूवृधौ मर्मवेधिनावित्यर्थः ।

ऋदूपे इत्यस्य निर्वचनम्—अर्दनपातिनावित्यादि । अर्दनेन हिंसया वेधनेन ताडनेन आत्मनो गमनेन तन्वंत इषोर्यच्छरीरं शरीरिणं पातयितारौ अर्दनपातिनौ मर्मणि रूपादे मर्मण्यर्दनवेधिनाविति । नेदं 'व्यध ताडने' इत्यस्य रूपम् । किं तर्हि ? तौदादिकस्य 'विध विधाने' इत्यस्य । अर्दनेन विधतः कुर्वतस्ताडयतः इति । विधानं चानुष्ठानकरणम् । तेन च क्रियासामान्येन क्रियाविशेषो लक्ष्यते । अतोऽर्थः स एव ताच्छीलिकेन णिनिप्रत्ययेन दर्शितः । इह धनुःसम्बन्धाद् इषुरिति गम्यते बुन्दः । अस्यैवार्थस्य दार्ढ्यार्थमुदाहरणं दर्शयति स्म ।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
त्रयस्त्रिंशः खण्डः । ]

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—[ ऋ० ८।७७।११ ] 'तुवि ( वी C. ) क्षं ते' इत्येव प्रतीकम् B. C.
३—सुतमयं B. 'सूमयं' इति त्रुटितम् B.
४—'सूम' इति त्रुटितम् B. C.
५—'ऋदुशब्दो' इति पाठो युक्तो भवेत् ।
६—ऋपूर्विधौ B. ऋपूवृधो C.
७—मवेधितावित्यर्थः B. C.
८—अर्दनवातानाविसादि B. C.
९—'न' इति त्रुटितम् B.
१०—हिंसाया B. C. ११—त्रासनेन B. C.
१२—तलवत B. १३—शरीरणं C.
१४—पाययितारो B. वातयितारो C.
१५—अत्र'रूपादेः'इति'उपाधेः'इति वा पाठो भवेत् । विषयस्य स्थितलक्ष्यस्य वा मर्माणीत्यर्थः ।
१६—नापि B. 'ति' इति त्रुटितम् B. C.
१७—[ धा० ४।७५ ]
१८—दिक इत्यस्य B. C. १९—[धा० ६।४४ ]
२०—'वि' इति द्विर्लिखितम् B. C.
२१—'त' इति द्विर्लिखितम् B. C.
२२—ताडयत इति B.
२३—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ चतुस्त्रिंशः खण्डः । ]

निराविध्यद् गिरिभ्य आ धारयत् पक्वमोदनम् ।
इन्द्रो बुन्दं स्वाततम् ॥

कुत्सस्येतदार्षम् । निर्विध्यति गिरिभ्यो गिरिशब्दोऽत्र मेघनाम्नो निर्धारणषष्ठ्याः स्थान एषा पञ्चमी । गिरीणां मेघानां मध्ये य आधारयद् आभिमुख्येन धारयति । पक्वं परिपक्वयोग्यमुदकानाम् । ओदनं मेघनामेदम्, मेघम् । कोऽसौ ? इन्द्रः । कथं निरविध्यत् ? बुन्दमिषुं स्वाततमाकृष्टं कृत्वेति शेषः । तृतीयायाः स्थाने वा द्वितीया । बुन्देन स्वाकृष्टेनेत्यर्थः । ओदनशब्दं निराह उदकदानं ददातीति दानमुदकदानम् । व्याख्यातो बुन्दः ।

वृन्दमित्यनवगतम् । समुदायोऽभिधेयः । तत्पुनरेतेन बुन्देन व्याख्यातः, क्रियायोगसमवायसम्भवात् । वीणासमवायाच्च प्रसिद्धत्वान्निगमो न प्रदर्शितः ।

वृन्दारकोऽप्येवमेव व्याख्यातः पूजावचनः । तत्र प्रयोगो वृन्दारक इति वैदिके । उपनिषत्सु प्रयोगः ।

किरित्यनवगतम् । कर्तेत्यवगमः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
चतुस्त्रिंशः खण्डः । ]

---

१-आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो न दृश्यते ।
२-[ ऋ० ८।७७।६ ] 'निराविध्यद् गिरिभ्यः' इत्येव प्रतीकम् B. C.
३-शब्दा मेघ B. C.
४-यति B. C.
५-'परिपाक' इति युक्तं स्यात् ।
६-दका ( क C. ) नाम B. C.
७-त्योदन मेघ B. C. ८-विध्य C.
९-मा ( त्वा C. ) कमाकृ B. C.
१०-बुन्देषा ( त्वा C. ) कृष्टो नेत्य B. C.
११-मदनशब्दं B.
१२-बुन्दमित्य B. C. आदर्शपुस्तकेष्वत्र प्रकरणे, वृन्दपदे वृन्दारकपदे च सर्वत्र बकार एव पठ्यते ।
१३-यो निषेधः B. C.
१४-बुन्दो न B. C.
१५-तरित्यन C.
१६-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [-अथ पञ्चत्रिंशः खण्डः । ]

अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः ।
अहरहर्जायते मासि मास्यथा देवा दधिरे हव्यवाहम् ॥

सौचीकस्याग्नेर्विश्वेषां च देवानां संवादे देवानामिदमार्षम् । अयं यो होता ह्वाताऽग्निः । कः ? किं. कर्ता उकारः पदपूरणः । सायं मध्यरश्मिसंयमनाद् यम आदित्योऽभिप्रेतः आदित्यस्य । कथं पुनरग्निरादित्यस्य कर्ता ? उच्यते । 'अग्नेर्वादित्यो जायते' इति श्रुतेः । कमपि कमित्यन्ननाम अन्नमपि काल्यमूहे वहति । यत् समञ्जन्ति सम्यग्गच्छन्ति व्याप्नुवन्ति भक्षयन्तीत्यर्थः । के ? देवाः । किञ्च अहरहः अहन्यहनि अग्निहोत्रहोमार्थमाहवनीयात्मना जायते मासि मासि पिण्डपितृयज्ञार्थम् । प्रदर्शनं चैतत् । अर्धमासदर्शपूर्णमासार्थम् । संवत्सरे च सोमयागार्थम् । अथ शब्दस्य एतस्मादर्थस्य श्रवणाद् यस्मादित्यध्याहार्यम् । यस्मादेव जायते अथतस्मात् कारणाद् देवा एवं दधिरे । शुद्धोऽप्ययं दधातिर्निपूर्वार्थे द्रष्टव्यः, निदधिरे निहितवन्तः । हव्यवाहं हविषो वोढारम् । अस्मिन्नधिकारे स्थापितवन्त इत्यर्थः ।

उल्बमित्यनवगतम् । ऊर्णोतेरिति धातुनिर्देशार्थम् । ऊर्णोतेर्ह्रस्वत्वरेफलोपत्वादिर्वश्च प्रत्ययः । वृणोतेर्वा वकारस्योकारो बश्च प्रत्ययः । गर्भस्याच्छादनमभिधेयम् । उदाहरणम्—

महत्तदुल्बं स्थविरं तदासीद् येनाविष्टितः प्रविवेशिथापः ।
विश्वा अपश्यद्बहुधा ते अग्ने जातवेदस्तन्वो देव एकः ॥

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—[ऋ० १०।५२।३] 'अयं यो होता' इत्येव प्रतीकम् B. C.
३—सौचि (B. C.) कुत्स्यामेः B.
४—मिन्द्रमारिषम् B. C.
५—किम् B C.
६—इकारः B. C.
७—साय B. सुः य C.
८—रानिकादिस्य B. राग्निचादित्यस्य C.
९—[अनुपलब्धमूलमिदं वचनम् ।]
१०—तमपि कमित्यन्नं नाम B. C.
११—तमपि काल्य B. C. 'अन्नं हविः काल्यं' इति वा स्यात् ।
१२—यागवन् B. मो यागमत् C.
१३—मन्त्रशब्दस्य B. C. १४—एतस्यार्थस्य B.
१५—णादृसादित्य B. णादस्मादिष्याह्ना C.
१६—अत्र 'दधातिः' इति युक्तं स्यात् ।
१७—भविकारे C.
१८'रेफत्वादिः' इति पाठो युक्तः ।
१९—यश्च C.
२०—[ऋ० १०।५१।१] 'महत् तदुल्बम्' इत्येव प्रतीकम् B. C.

सौचीकस्याग्नेर्विश्वेदेवानाम् । महत् बहुलं जरायोरन्तर्गर्भवेष्टनं स्थविर स्थूलं चिरन्तनं वा आसीत् । येन उल्बेनावेष्टितः प्रविवेशिथ प्रविष्टवान् वा । उत्तरार्धर्चे-व्याख्यानमर्थादिदं प्रकृतव्याख्यानस्याभावात् । किञ्च विश्वाः सर्वा ऋतुषु अप्सुभिर्ध्वभिषु च प्रविष्टा अपश्यद् दृष्टवान् । बहुधानेकप्रकारं ते तव स्वभूताः हे अग्ने जातवेदः त्रियर्त्वमूकः... ति देव एकः ।

ऋचीसमित्यनवगतम् । पृथिव्यभिधेया । अगतभासमित्येवमाद्याः शब्दसमाश्रय उपपद्यन्ते । धात्वन्यत्वकृतो विशेषः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या-) ध्यायस्य
पञ्चत्रिंशः खण्डः ]

---

१—सोचीकमग्निः विश्वेदेवा नः ( न्दः C. ) B. C.
२—वागर् B. C.
३—वेष्टितं B.
४—दृष्टवान् वा C.
५ अयं पाठ सन्दिग्धः ।
६—सन्दिग्धोऽयं पाठः । सैवमत्र 'अप्सु दिक्षु च' इति पाठः कदाचित् स्यात् ।
७—र्धीयत्व B. अत्र त्रुटित. कश्चन पाठः ।
८—गमेतम् B. गमेतम् C. एतदनन्तरं च 'अगत (द B.) समासमित्येवमाद्याः (द्याः B.) शब्द-समाश्रयः' इत्यधिकः पाठः B C.
९—आदर्शपुस्तकेषु गङ्गसमानिर्दिष्टो न दृश्यते ।

# [ अथ षट्त्रिंशः खण्डः । ]

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् ।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥

हिममुदकमत्राभिप्रेतम् । उदकेन वृष्ट्याख्येनाग्निम् । लुप्तोपममेतत् सामर्थ्याद् द्रष्टव्यम् । अग्निमिव अग्निसदृशमित्यर्थः । किं पुनस्तत् ? घ्रंसम् अहर्नामेदम् । अहः सामर्थ्याद् ग्रीष्मान्तर्वर्ति । तदवारयेथां युवां शीतीकुरुथ इत्यर्थः । पितुमतीं पितुरित्यन्ननाम । ऊर्जमित्यूर्क्शब्देनापि उदकलक्षणो रस उच्यते । पितुमतीमूर्जमन्नमन्नं च रसम् । अन्नसहितं पेयमुदकमित्यर्थः । पुरोडाशादिसहितमाज्याहुतिलक्षणं वास्मै अग्नयेऽधत्तम् । वृष्टिद्वारेण दत्तम् । किञ्च ऋबीसे पृथ्वीद्रव्ये प्रथितमधोनिहितं हि नम । अत्रिम् अत्तारं हविषामोषधिवनस्पत्यादीनां वा । अश्विना हे अश्विनौ आवषिफलभूतानां धान्यानां रूपेण उन्निन्यथुः ऊर्ध्वं नयथः । सर्वगणं सर्वेण नामगणेन युक्तमग्निं यः कश्चिदोषध्यादीनां गणस्तेन सर्वेणाग्निरेव युक्तः । कथम् ? ओषध्यादीनां पृथिवीविकारत्वात् पार्थिवादग्नेरनन्यत्वाद् अग्नेरेतद्रूपमापन्नस्य रूपं स्वस्ति अविनाशोऽयं न भवति तथा ।

इति निरुक्तविवरणसमुच्चये
एकादशस्या [ षष्ठस्या- ] ध्यायस्य
षष्ठः पादः समाप्तिमगमत् ।
समाप्तश्चाध्यायः ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १।११६।८] 'हिमेनाग्निम्' इत्येव प्रतीकम् B C
३–'स' इति त्रुटितम् B C
४–ऽंसमर्हेणा ( मा C ) मेव (द C) म B C
५–युवा॰ C.
६–पितुमिति B पितुमति C
७–वृष्टिद्वारेण O ८ प्रनित C.
९–'हि' इति त्रुटितम् B C
१०–उन्निनयथुः ( थु C ) B C
११–सर्वेगुण B
१२–'गणेन युक्तमग्निं' इत्येतावान् पाठस्त्रुटितः B
१३–ध्यादिनोमगण B
१४–'थ' इति त्रुटितम् B C
१५–'दने' इत्येव पाठः C
१६–द्रूप आपन्न C
१७–नाशो यो न C
१८–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।
१९–'समाप्तिमगमत्' इति नास्ति C